UNIVERSITY OF TRAVANCORE
TRIVANDRUM SANSKRIT SERIES
NO. 173.

# BHĪMAPARĀKRAMA

BY

S'ATĀNANDASŪNU




Published by
SURANAD KUNJAN PILLAI M. A.,
Honorary Director,
University Manuscripts Library,
TRIVANDRUM

1954/1130.

अनन्तशयनविश्वविद्यालयः

अनन्तशयनसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १७३.

# भीमपराक्रमं

शतानन्दकवीन्द्रसूनुविरचितम् ।




प्रकाशकः

शूरनाड् कुञ्जन् पिळ्ळ एम्. ए.,
पौरस्त्यग्रन्थप्रकाशनकार्यालयाध्यक्षः ।

अनन्तशयने अल्पनस् मुद्रालये मुद्रितः ।
१९५४/११३०.

मूल्यम् एकम् रूप्यकम् ।

# PREFACE

The present publication 'Bhīmaparākrama' is a dramatic piece belonging to the class of Vyāyoga. Das'arūpaka, the well known work on dramaturgy, defines it as follows :—

"ख्यातेतिवृत्तो व्यायोगः ख्यातोद्धतनराश्रयः ।
हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद् रसाः ॥
अस्त्रीनिमित्तसङ्ग्रामो जामदग्न्यजये यथा ।
एकाहाचरितैकाङ्को व्यायोगो बहुभिर्नरैः ॥ "

As the name indicates, this play glorifies the exploit of Bhīma in vanquishing and slaying Jarāsandha, the king of Magadha. Yudhiṣṭhira was planning to perform Rājasūya after killing Jarāsandha. But then he received a message from Jarāsandha either to pay him tribute or to leave the kingdom and seek refuge in Dvārakā. The Pāṇḍavās accepted the challenge and promised to meet Jarāsandha. Thereafter, disguised as *Snātakās*, Kṛṣṇa, Bhīma and Arjuna set out to Magadha. Jarāsandha welcomed them unaware of their identity, but they refused to partake of his entertainment, as Jarāsandha was preparing for a *Puruṣa-medha*, human sacrifice, in which numerous kings were to be sacrificed. Then arose a dispute between Kṛṣṇa and Jarāsandha as to the righteousness of such a sacrifice. Nārada who happened to come there, was made the umpire. Jarāsandha agreed to do the behest of Kṛṣṇa in case of defeat. Kṛṣṇa gained victory, and according to the original agreement, Jarāsandha had to meet Kṛṣṇa and his companions in a duel. In the duel which followed, Bhīma killed Jarāsandha. Kṛṣṇa thereon celebrated the victory by releasing the kings who had been imprisoned by Jarāsandha.

The story, in the main, is taken from Mahābhārata, but is presented with due dramatic effect. No information is available about the author, except the vague mention made in the *sthāpanā* as 'करिष्यते भीमपराक्रमाख्यं काव्यं शतानन्दकवीन्द्रसूनुः ।' Judging from the style of composition we should admit that this work deserves high praise.

The edition is based on Manuscript C. O. 1694 and Transcript No. 31. The manuscript was obtained from Sri K. R. Kesava Pisharodi, Katuttrutti, Vaikam. It is in Malayalam script and is written in palm leaves. We hope that this will be a valuable addition to our Sanskrit series.

University Manuscripts Library, 17-12-1954.

SURANAD KUNJAN PILLAI,
*Honorary Director.*

॥ श्रीः ॥

शतानन्दकवीन्द्रसूनुविरचितं

# भीमपराक्रमम् ।

---

गौरीबाहुलताशङ्खवलयांशुभिरञ्जसा ।
कृष्णोऽप्यर्जुनतां नीतः कण्ठो भीमस्य पातु वः ॥ १ ॥

(नान्द्यन्ते ततः प्रविशति सूत्रधारः ।)

सूत्रधारः—(सहर्षम्) अयमपूर्वाभ्युदयवृत्तान्तः प्राणसमायै समुपहर्तव्यः । यतः—

उत्सवस्य परा काष्ठा सूक्तिलाभो हि तद्विदाम् ।
सुहृद्भिः संविभागेन स सहस्रगुणायते ॥ २ ॥

(परिक्रम्य नेपथ्यं प्रति)

आर्ये ! यदि कल्याणाकर्णनकुतूहलि ते श्रवणयुगलम्, तदितस्तावदागम्यताम् ।

(प्रविश्य)

नटी—(क) एस म्हि अवहिदा । अय्यो कहेदु ।

---

(क) एषास्म्यवहिता । आर्यः कथयतु ।

---

१. 'भ्युदयपूर्वाभ्युदय' ख.
२. 'सुहृद्भ्यः' ख.
३. 'कहहिदु' ख.

सूत्रधारः — आर्ये! ननु स्मरसि यत्[1] सिद्धार्थकनाम्ना[2] त्रैकाल्यविदुषा कार्तान्तिकेन मां प्रत्यादिष्टम् —

करिष्यते भीमपराक्रमाख्यं
काव्यं शतानन्दकवीन्द्रसूनुः।
मनीषिणां संसदि तत्प्रयोक्ता[3]
त्वं सम्पदां धाम भविष्यसीति[4] ॥ ३ ॥

नटी — (क) जाणामि जाणामि[5] एदम्। ता किं दाणि कइणा तं णिबन्धणं समाविदम्।

सूत्रधारः — आर्ये! समापितं समर्पितं च मम करे, तदिदमुक्तं च —

अणुमपि गुणमुच्चैः कुर्वतां पण्डितानां
विवृणु तदिदमग्रे नेतरेषां कदाचित्।
सफलयति यथाब्धौ शुक्तिरभ्रस्य वृष्टिं
प्रभवति न तथा[6] हि क्वापि शम्बूकयूथम् ॥ ४ ॥

अपि च —

ये सूक्तीन्दुकलाकलङ्कजनका ये गाढगर्वज्वरा
ये वा केवलतर्ककर्कशधियः साक्षाच्च ये श्रोत्रियाः।
ये च द्वेषमषीमलीमसधियस्त्वान् प्राज्ञगोष्ठीरस-
प्रौढप्रावृडवग्रहान् परिहरन् वाचां प्रचारं[7] कुरु ॥ ५ ॥

(क) जानामि जानाम्येतद्। तत् किमिदानीं कविना तन्निबन्धनं समापितम्।

१. 'यद्' इति खपाठे नास्ति।
२. 'सिद्धाकनाम्ना' क.
३. 'तत्प्रयोगात्' ख.
४. 'करिष्यसीति' ख.
५. द्वितीयं 'जाणामि' ख. पाठे नास्ति।
६. 'तथापि' ख.
७. 'वाचः प्रचारं' ख.

नटी — (क) अय्य! सोहअम् । अह्माणं मणोरहकप्पपाअवो फुप्फिओ ।

सूत्र — आर्ये ननु फलित एव । यतस्तदभिनयकुतूहलिन्या विद्वत्परिषदा [1]साम्प्रतमित्थमाज्ञप्तः ।

काव्यकोशनिगूढानि ग्रथितानि नवैर्गुणैः ।
उद्घाट्य रसरत्नानि त्वं नः सन्दर्शयेरिति ॥ ६ ॥

नटी — (ख) अणुग्गहीद म्ह । (विमृश्य सश्लाघम्) सव्वदा [3]सिलहणिज्जं एदं णिबन्धणं । जेण सच्चवअणो आदेसओ, कित्ति भाअणं कई, पेक्खणविणोदिणो अय्यमिस्सा सफळमणोरहा अह्मे (वि) संवुत्ता ।

सूत्र — [4]आर्ये ! नन्वेवम्

अपि स्वार्थे प्रवृत्तानां धीमतां सदुपक्रमः ।
बहूनामुपकाराणां यान्ति कारणतां फले ॥ ७ ॥

(नेपथ्ये)

भद्र ! कल्याणभाजनं भूयाः यतो भद्रमिदमुदाहरसि ।

---

(क) आर्य शोभनम् । अस्माकं मनोरथकल्पपादपः पुष्पितः ।

(ख) अनुगृहीताः, स्मः । सर्वथा श्लाघनीयमेतद् निबन्धनम् । येन सत्यवचन आदेशकः कीर्तिभाजनं कविः, प्रेक्षणविनोदिनः आर्यमिश्राः, सफलमनोरथा वयमपि संवृत्ताः ।

---

१. 'सांप्रतमहमिदमाज्ञप्त:' ख.

२. 'हिद म्हि' ख.

३. 'सिळाहणिज्जं' ख.

४. 'आर्ये' इति खपाठे नास्ति ।

५. 'इदम्' इति खपाठे नास्ति ।

नटी — (क) अय्य! को एसो तुह्याणं वअणं अहि-णन्दइ।

सूत्र — (विलोक्य) आर्ये! एष खलु भरतकुलधुरन्धरस्य धर्म-राजस्य पुरोहितो धौम्योऽस्मद्वचनं श्लाघयन्निव एवाभिवर्तते। तदावामनन्तरकरणीयेषु भरतान् नियोक्तुमितो गच्छावः।

(इति निष्क्रान्तौ।)

स्थापना॥

---

(ततः प्रविशति धौम्यः।)

धौम्यः — (सश्लाघम्) 'अपि स्वार्थे प्रवृत्तानां—' इति चतुर-मुपन्यस्तम्। तथाहि ज्येष्ठपाण्डवस्यायमारम्भः।

निष्पत्तौ राजसूयस्य बन्धमोक्षे च भूभृताम्।
भीमस्य च प्रतिज्ञा(भ्युल?नुल्ल)ङ्घने मूलतां गतः॥ ८॥

तत् सर्वथा मयाप्यमुष्य निष्पत्तये यथाशक्ति प्रयतितव्यम्। नेपथ्यं प्रति) वत्स! मेधातिथे!। (प्रविश्य)

शिष्यः — (क) अयह्मि।

धौम्यः — वत्स! कष्टमिदं पारतन्त्र्यं नाम। तत्रापि,

---

(क) आर्य! क एष युष्माकं वचनमाभिनन्दति।

(ख) अयमस्मि।

---

१. 'मद्वचनं' ख.

२. 'भरतं' क.

३. 'नैपथ्यं' ख.

नृपाणां कल्याणं विपदुपगमे प्रार्थ्यमनिशं
विपर्यासे दैवाज्जगति विततं सत्यमयशः ।
परार्थे भर्तव्यः पशुभिरिव भारः खलु महा-
नहो पौरोहित्यं न च भवति भोगो न च तपः ॥ ९ ॥

शिष्यः — (क) सुट्ठु भअवं भणादि ।

धौम्यः— वत्स! साधवः सर्वप्रकारेणाप्यनुग्राह्या इति प्रतिपन्नपाण्डवपौरोहित्यभारा वयं वर्तामहे । सम्प्रति च तत्प्रत्ययादहं रहसि राज्ञा विज्ञापितः । यदुत जनार्दनवृकोदरधनञ्जयानामविलम्बितमनुष्ठीयतां प्रास्थानिकं शान्तिकर्मेति । तदचिरेणैव समित्कुशादीनि होमसाधनानि सिद्धार्थकदूर्वायवाङ्कुरगोरोचनाप्रभृतीनि माङ्गलिकानि सम्भावय ।

शिष्यः— (ख) भअवं! अविण्णादवुत्तन्तो पुच्छामि । किंदाणिमेदेहिं उव्वकन्तम् ।

धौम्यः — वत्स! महान् खलु कार्यभारः ।

शिष्यः — (ग) तं कहेदु भअवम् ।

धौम्यः — बालः खल्वसि । राजमन्त्रस्तु चौर्यार्जितद्रविणसञ्चय इव न सुखप्रकाश्यो भवति । तथापि त्वामाभ्यन्तर इति किञ्चिन्निवेद्यते ।

शिष्यः — (घ) अणुग्गहिदो ह्मि ।

(क) सुष्ठु भगवान् भणति ।
(ख) भगवन्! अविज्ञातवृत्तान्तः पृच्छामि । किमिदानीमेतैरुपक्रान्तम् ।
(ग) तत् कथयतु भगवान् ।
(घ) अनुगृहीतोऽस्मि ।

---

१. 'नराणां' ख.
२. 'तदुत' ख.
३. 'तन्नाचिरमेव' ख.
४. 'संपादय' ख.
५. 'राजमन्त्रे' ख.
६. 'द्रव्य' ख.

धौम्यः — (समन्तादवलोक्य) नात्र कश्चिदन्यो जनः । वाढ्-स्रब्धं श्रूयताम् ।

शिष्यः — (क) अवहिदो ह्मि ।

धौम्यः — एकदा तु निर्वर्तितदिवसमुखकृत्ये यथोचित-सम्भावनापरितोषितभृत्ये नमन्नरपतिशिरःपरम्परावतंसितचरणे पौरवाभरणे सकलजगदानन्दने पाण्डुनन्दने सह सुहृद्भिर्विविधविनोदनपेशलं दर्शितमयकौशलं चतुरविलासिनीसञ्चारितचारुचामरमरुच्छीतलं मणिमयसभातलं रुचितुलितपञ्चबाणे सम्यगलङ्कुर्वाणे,

किमिदमिति जनानाम[1]क्षिविक्षोदहेतुं
बिसविदलधवलश्रीं विक्षिपन् दिक्षु तेजः ।
तरुणपवनकोणास्फालवा[2]चालवीणः
परिषदमभिपेदे नारदस्तां नभस्तः ॥ १० ॥

शिष्यः — (ख) [3]अम्मो विह्मअणिज्जं खु जुहिट्ठिलस्स माहप्पं । जदो एआरिसाणं वि महप्पाणं अभिगमणिज्जो वट्टइ ।

धौम्यः — किमुच्यते । पाण्डवज्येष्ठो युधिष्ठिरः [4]खल्वयम् । अपि च,

धर्म्या प्रवृत्तिर्जगतां हिताय
सम्बन्धि मित्रं मधुकैटभारिः ।
लोकोत्तरं भ्रातृषु यस्य हार्दं
काः सम्पदो न स्पृहयन्ति तस्मै ॥ ११ ॥

---

(क) अवहितोऽस्मि ।

(ख) अहो ! विस्मयनीयं खलु युधिष्ठिरस्य माहात्म्यम् । यथा एतादृशानामपि महात्मनां अभिगम्यो वर्तते ।

---

१. 'अक्षिनिक्षेपहेतुं' ख.
२. 'वाचालवीणं' ख.
३. 'अह्मो' ख.
४. 'खल्वप्ययम् ' क.

शिष्यः — (क) तदो तदो ।

धौम्यः — ततः स भगवानजातशत्रुणा [1]यथोचितामपचितिं लम्भितः समुपविष्टश्च [2]विष्टरे तदेतत् सन्दिदेश ।

त्रिविष्टपसदां तुष्ट्यै पितुः पाण्डोर्नियोगतः ।
राजसूयं तवाहर्तुं वध्यो मगधराडिति ॥ १२ ॥

शिष्यः — (ख) अदिमहन्तो खु णिओअभारो । तदो तदो ।

धौम्यः — ततश्च [3]महान् प्रसाद इति तन्नियोगं निजमकुट[4]-शिखरमारोपयति भीमाग्रजे स तपोनिधिस्तिरोदधे ।

शिष्यः — (ग) मण्णे तस्स कलहप्पिअस्स मुणिणो एसो अभिप्पाओ । [5]जइ जुहिट्ठिरो राजसूअं उपक्कमिस्सादि । तदो पण्डुपुत्ताणं सअलराअमण्डलेण सद्धं इदो तदो [6]संपहारा वट्टिस्संति ।

धौम्यः — (विहस्य) वत्स ! स खलु भगवान् [7]परमार्थतिरोहित-रजोगुणोऽपि निसर्गतो निरर्गलसुभटसम्फेटलम्पटचित्तवृत्तिरेव वर्तते । (विमृश्य) भवतु को दोषः ।

अप्युदारचरित्राणामसारे क्वचिदादरः ।
कस्मै गुणाय गृह्णाति महानीलमणिस्तृणम् ॥ १३ ॥

---

(क) ततस्ततः ।

(ख) अतिमहान् खलु नियोगभारः । ततस्ततः ।

(ग) मन्ये, तस्य कलहप्रियस्य मुनेरेषोऽभिप्रायः । युधिष्ठिरो राजसूयमुपक्रमिष्यति । तदा पाण्डुपुत्राणां सकलराजमण्डलेन सार्धं इतस्ततः संप्रहारा वर्तिष्यन्ते ।

---

१. 'यथोचितमुपचितिमुपलम्भितः' ख.
२. 'विष्टरे सदे' ख.
३. 'महाप्रसादः' ख.
४. 'मकुटभार' ख.
५. 'जइ' इति कपाठे नास्ति ।
६. 'अवस्सं संप' ख.
७. 'परमार्थविज्ञानतिरोहित' ख.

**शिष्यः** — (क) तदो तदो ।

**धौम्यः** — ततस्तत्कालमेवाजिहीर्षता पुरुषमेधं मगधराजेन प्रीतो वचोहरः । रे रे पाण्डुनन्दन !,

बाणश्रेणिकरालकार्मुकमहःकिर्मीरदोर्मण्डल-
व्यापारप्रतिषिद्धवैरिवनिताधम्मिल्लमाल्यार्पणः ।
जन्योद्योगपराङ्मुखे नृपगणे स्वस्मै प्रतापाय यः
सङ्ग्रामाग्रसमग्रसम्मदभरप्रत्यर्थिने कुप्यति ॥ १४ ॥

स जरासन्धदेवस्त्वामाह —

नृपतिपशुसहस्रसाध्यसीमा
पुरुषमखो भविता भवस्य तुष्ट्यै ।
तदुपहर करं ममोचितं वा
भज मकरालयमन्धकैः समं वा ॥ १५ ॥

**शिष्यः** — (ख) अहो अवहीरिअसव्वलोओ गव्वगरिमा मागहस्स । तदो तदो ।

**धौम्यः** — ततश्च तदाकर्ण्य मगधराजनिगलितनिखिलक्षत्रियपरित्राणाय किमपि चिन्तयत्यधिगतनये तपस्तनयेऽनुचिताकर्णनघूर्णमानरोषकलुषीकृतेक्षणोत्कया तत्क्षणमिव दिधक्षति जगत्त्रयं बलतुलितमहासेने भीमसेने, गुरुनियोगपूर्वपरावरप्रतीकारसम्पादनाकुले नकुले, द्विषदनादरतिरोहितरोषमीषदपहसति विनयनन्दितनरदेवे सहदेवे राजानुमत्या कुमारफल्गुनेन तदिदं प्रत्यभिहितो दूतः ।

---

(क) ततस्ततः ।

(ख) अहो अवधीरितसर्वलोको गर्वगरिमा मागधस्य । ततस्ततः ।

---

१. 'अद्योयोगः' क.

२. 'तदुपनय करं' ख.

३. 'मकराकरमन्धकैः' ख.

४. 'तवागाकर्णन' ख.

क्रतुरपि सुकरो मुदे स्मरारे-
नरपतयः पशवश्च तेन कार्याः ।
यदि न मृगयते यमस्य तुष्टयै
समरमखे मगधेश्वरं पशुत्वम् ॥ १६ ॥

शिष्यः — (क) सरिसं कुरुकुलालङ्कारस्स पुरन्दरतणअस्स । तदो तदो ।

धौम्यः — ततश्च पुनरपि रिपुदूतेन दर्पोदग्रमिदमुदग्राहि । रे रे कुमाराः ! अनाकलितपरात्मसारोऽयमारम्भो भवताम् । के यूयं जरासन्धदेवे वैरमनुसन्धातुम् । तथाहि —

आज्ञामास्थाय केचिद्दधति निजपदे स्थास्नुतां क्षुण्णपक्षाः
पर्यस्ताः सन्निवेशाद् दिशि दिशि विवशास्तुंगतुत्वाय केचित् ।
राजानस्तेन भग्नाः कतिचिदधिगता गर्भमम्भोनिधीनां
सुत्रामत्रासिनानां परिणतिमुररीकुर्वते पर्वतानाम् ॥ १७ ॥

अपि च,

सङ्ग्रामे मानतुङ्गं नमयति स धनुर्नैव मौलिं कदाचित्
चापस्यैवापराङ्गं प्रकटयति दृशां गोचरे न स्वकीयम् ।
दृष्टिः पृष्ठे रिपूणां निपतति न पुनर्बाणपङ्क्तिस्तदीया
जीवापायः परेषां भवति रणमुखे नैव तत्कार्मुकस्य ॥ १८ ॥

शिष्यः — (ख) सच्चं एईदिसो एव्व मागहो । तह वि किं जदुघरातक्कपङ्कपडिअसोअरकुडुम्बुद्धरणकुंजरं बकाहिडिम्बविद्धंसणा-

(क) सदृशं कुरुकुलालङ्कारस्य पुरन्दरतनयस्य । ततस्ततः ।

(ख) सत्यं एतादृश एव मागधः । तथापि किं जतुगृहातङ्कपङ्क-

१. 'स्तास्स्वान्निवेशात्' ख.
२. 'न स्वमौलिं' ख.
३. 'नापि' ख.
४. 'कि एस जदु' ख.
५. 'द्धरणवणकुञ्जरं' ख.

डम्बरविह्माविदतिहुवणं भीमसेणं सअळवीरजोहसाहसेकणिहसं खंडव-दावदहणखंडिआखण्डलपरक्कमं गण्डीविणं च ण जाणइ।

धौम्यः—वत्स! कथमिव न जानाति। औद्धत्यमेवापराध्यति।

कुतो मदावलिप्तानां परोत्कर्षविचेतनम्।
दन्तभङ्गं तटाघाती[1] विविनक्ति न हि द्विपः॥ १९॥

शिष्यः—(क) एव्वं एदम्। तदो तदो।

धौम्यः—ततश्च दर्शिताहङ्कारस्य[2] विद्विषो वचोहरेण प्रयुक्त-मवमानमसहमानेन कठिनकरास्फालित[3]विपुलमणिसभास्तम्भसम्भ्रम-भ्रमितपरिषदा तुलितकल्पान्तपावकेन[4] कुमारवृकोदरेण तदिदमजात-विद्विषे[5] प्रतिज्ञातम्।

गुरुतरयमदण्डोच्चण्डदोर्दण्डघातै-
र्विघटितविकटोरःपीठपाटालकलाटम्।
अधिसमरम[6]रातिं भीमसेनेन भग्नं
नृप! नियतमहोभिः श्रोष्यसि द्वित्रमात्रैः॥ २०॥

शिष्यः—(ख) समत्थं पडिण्णादम्। तदो तदो।

धौम्यः—ततस्तदाकर्ण्य यद्येवमित एव न चिरादागतं मगधराजमवगच्छतेत्यभिधाय प्रस्थितः प्रणिधिः।

पतितसोदरकुटुम्बोद्धरणकुञ्जरं बकहिडिम्बविध्वंसनाडम्बरविस्मापितत्रिभुवनं भीमसेनं सकलवीरयोधसाहसैकनिकषं खाण्डवदावदहनखण्डिताखण्डलपराक्रमं गाण्डीविनं च न जानाति।

(क) एवमेतत्। ततस्ततः।

(ख) समर्थं प्रतिज्ञातम्। ततस्ततः।

---

१. 'तदाघाती' ख.
२. 'तद्दर्शिता' ख.
३. 'करतलास्फालित' ख.
४. 'वक्रेण वृकोदरेण' ख.
५. 'तदिदं जातविद्वेषेण' ख.
६. 'अभिसमर' क.

शिष्यः — (क) तदो तदो ।

धौम्यः — ततश्च बहुधापि धिया[1] बार्हद्रथं समुच्छिद्य तत्क्षण-प्रणिहितलेखहार[2]वचनादागतेन भुवनभारसंहारिणा शौरिणा रिपुकुल-धनञ्जयेन कुमारधनञ्जयेन सार्धं स्नातकलाञ्छनप्रतिच्छन्नः प्रतिज्ञा-समर्थनाय राज्ञा प्राभञ्जनिरनुज्ञातः ।

शिष्यः[3] —(ख) तदो तदो ।

धौम्यः — (ध्यात्वा) अहो धर्मराजस्य बुद्धिमत्ता । यत् कुमारवृकोदरस्य तस्यौद्धत्यपरतन्त्रतामाशङ्क्य,

'अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम्' इति सन्दिष्टम् ।

शिष्यः— (ग) अहो ए(दे)दाणिं कं तत्थ एकाइणो गमिस्सन्ति ।

धौम्यः — अथ किम् । बुद्धिसाधनाः खलु मनास्विनः ।

शिष्यः[4] — (घ) अहो एदाणं ह्णादअवेसधारणे को अभि-प्पाओ ।

धौम्यः — तत् खल्वमुष्मिन् कर्मणि निरपायमौपयिकम् । यतः, 'स्नातकव्रति[5]नः कदाचिदपि नावधीरयामीति मगधराजस्य प्रतिज्ञाव्रतम् ।

शिष्यः — (ङ) ता एदे किं भोअणत्थमदिहिणो भविस्सन्ति ।

धौम्यः — युद्धार्थमतिथयो भविष्यन्ति ।

---

(क) ततस्ततः ।

(ख) ततस्ततः ।

(ग) अहो एते इदानीं किं तत्रैकाकिनो गमिष्यन्ति ।

(घ) अहो एतेषां स्नातकवेषधारणे कोऽभिप्रायः ।

(ङ) तदेते किं भोजनार्थमतिथयो भविष्यन्ति ।

---

१. 'बहुधा धिया' ख.

२. 'लेखाहार' क.

३. इदं खपाठे नास्ति ।

४. 'शिष्यः — किं तत्थ एव्वं काइणो गमिस्सन्ति । ख.

५. 'व्रतिनं' ख.

शिष्यः— (क) अह किं एदाणं एस सङ्कप्पो सफळो भविस्सदि ।

धौम्यः — न ख (ल्व ? लु) वन्ध्याभिसन्धयो भवन्ति धीमन्तः । तदधुना नियोगमनुतिष्ठ ।

शिष्यः — (ख) जं भअवो आणवेदि ।

धौम्यः — अहमपि कालिन्दीमवतीर्य निर्वर्तितनियमाभिषेकः कमण्डलुना सलिलमाहरामि ।

[इत्युभौ निष्क्रान्तौ ।]

मिश्रविष्कम्भः[1] ।

(ततः प्रविशन्ति कृष्णार्जुनभीमसेनाः स्नातकवेषधारिणः ।)

कृष्णः — (भीमार्जुनाववलोक्य स्वगतम्) अहो नु कुरुकुलकुमारयोरनयोर्गुरुनियोगानुष्ठानसौष्ठवम् । तथाहि —

तरुणचरणपातैर्लङ्घितं वर्त्म दीर्घं
परिजनकरणीयं पाणिभिः कर्म सोढम् ।
प्रकृतिरपि निगूढा कृत्रिमैः संविधानैः
किमिव हि गुरुभक्त्या दुष्करं निर्भयानाम् ॥ २१ ॥

[प्रकाशम्] कुमार भीमसेन! वत्स फल्गुन! सम्प्रति हि —

गङ्गां विलङ्घ्य निकटे कुरुजाङ्गलानां
तीर्त्वा ततश्च सरयूसरितं रयेण ।
क्रान्त्वा च शोणमिमम्बुजरेणुशोणं[2]
प्राप्ता वयं पुरमिदं मगधेन्द्रगुप्तम् ॥ २२ ॥

---

(क) अथ किमेतेषामेष सङ्कल्पः सफलो भविष्यति ।
(ख) यद् भगवानाज्ञापयति ।

१. 'विष्कम्भकः' ख.
२. 'शोणनदमम्बुज' ख.

[अग्रतो विलोक्य]

अहो विभवतिरस्कृतवस्वोकसारा मगधराजधानी मुष्णाति चेतः । येषा —

पृथुकटकालङ्कारैः प्रचलपताकोज्ज्वलाङ्गुलीललितैः ।
तुङ्गैर्ध्वजभुजनिकरैः श्रियमाह्वयतीव नाकस्य ॥ २३ ॥

अर्जुनः — एवमेतत् । यथाह चाणूरमल्लमथनः ।

भीमः — वत्स फल्गुन ! प्राप्तं पदव्याः पर्यवसानं, नाद्यापि प्रतिज्ञायाः ।

अर्जुनः — तदपि नेदिष्ठं तर्कयामि । यदर्थमेव केशवोऽप्यनुचितवेषधारणक्लेशमनुभवति । तथाह्यस्य,

पाणौ चक्रप्रणयिनि पदं पश्य धत्ते कुसुम्भं
शार्ङ्गस्याधिश्रयति धनुषः स्थानमाषाढ एषः ।
वासोर्युग्मं विलसति सितं पीतकौशेयधाम्नि
प्रत्यादिष्टं सकलमपरं मण्डनं कुण्डलाभ्याम् ॥ २४ ॥

भीमः — एवमेतत् । सत्यमाह वत्सः ।

गतो वामनरूपी यः शक्रस्यार्थे बलेर्मखम् ।
सोऽस्मदर्थे व्रती भूत्वा याति शत्रोर्गृहं हरिः ॥ २५ ॥

(सर्वे परिक्रामन्ति ।)

कृष्णः — (पुरोऽवलोक्य) प्रत्यासन्नं राजमन्दिरं सम्भावयामि । यतः —

१. 'प्रकटपतकोज्ज्वला' क.
२. 'मल्ल' इति ख पाठेन.
३. 'पदव्यां' ख.
४. 'वेषधारी क्लेशं' ख.
५. 'तथाप्यस्य' ख.
६. 'युक्तं' ख.
७ 'कृष्णः' इति खपाठे नास्ति.
८. 'संभावयामः ।' ख.

दृश्यन्ते केतवोऽमी नवमणिकिरणैर्व्योम सीमन्तयन्तः
प्रासादाभ्यन्तरेषु प्रतिफलति मुहुर्बृंहितं वारणानाम् ।
अच्छाच्छैरातपत्रैः कवलितककुभो गोपुरस्योपकण्ठा-
न्निर्यान्त्येते नरेन्द्रा नृपचरणरजोधूसरोष्णीषपट्टाः ॥ २६ ॥

अर्जुनः — एवमेतत् । यथाह कालियमहाभुजङ्गजाङ्गुलिकः ।

भीमः — वत्स बीभत्सो ! नन्वद्यैवास्माभिरतिथिजननिर्विशेषैर्द्रष्टव्यो मगधराजः । तन्निर्धार्यतामाशीर्वचनसमुदाचारचातुर्यम् ।

अर्जुनः — अत्रैव मे मतिर्विभ्रमीति । यतः, जयतु देव इति भृत्यजनालापः, विजयतां महाराज इति अस्मदनभ्यस्तो विषयः । अभिलषितसिद्धिरस्त्विति प्रस्तुतविरोधः । दीर्घायुर्भूया इत्यसत्यवचनम् । तदत्र वृष्णिवीरः प्रमाणम् ।

कृष्णः — भवतु । कालोचितं किमपि व्याहरिष्यामः ।

( नेपथ्ये महान् कलकलः । सर्वे आकर्णयन्ति ।)

(पुनर्नेपथ्ये ।)

भो भो ! मगधराजपृतनापतयः ! शृण्वन्तु भवन्तः । एष खलु सम्प्राप्तो महाराजस्य प्रस्थानसमयः । तेन,

घण्टाटङ्कारघोरोड्डमरुकरिघटासङ्कटक्षोणिपीठं
धाटीभिर्घोटकानां झटिति खरखुरोद्धूतधूलीवितानम् ।
सान्द्राणां स्यन्दनानां ध्वजपटपटलीलीढदिक्चक्रवालं
सैन्यं सज्जयतां नः पटुसुभटभुजामण्डलोद्घूर्णखड्गम् ॥
[ २७ ॥

---

१. 'कण्ठे' ख.
२. 'निर्यान्त्वेते' ख.
३. 'यतः देव' क.
४. 'असत्यकथनम्' ख.
५. 'वीर एव' ख.
६. 'पृतनाधिपतयः' ख.

**अर्जुनः** — राज्ञः प्रस्थानमिति श्रूयते । तत् किं नु खल्विदम् ।

**कृष्णः** — मन्ये दूतकथितकुपितः सम्प्रति बार्हद्रथः कुरुराष्ट्रं प्रतिष्ठासुरिति ।

**भीमः** — यमराष्ट्रं प्रतिष्ठताम् ।

**कृष्णः** — तद् यावदचिरमद्वारेण प्रविश्य राजमन्दिरमरातिप्रस्थानप्रत्यूहमाचरामः ।

**उभौ** — बाढम् । (सर्वे परिक्रामन्ति) ।

**कृष्णः** — (पुरोऽवलोक्य ।) इयमास्थानशाला । कथमत्रासन्निहितो मगधराजः । तदेवं तावत् (किञ्चिदुच्चैः) भो भो राजमन्दिराभ्यन्तरचारिणः कञ्चुकीवर्षवराकिरातादयः! क इदानीं वर्तते मगधराजः ।

(नैपथ्ये)

सम्प्रत्युपक्रान्तकुरुराष्ट्रप्रयाणः साङ्ग्रामिकमङ्गलग्रहणाय लोहाभिहारभवनमधितिष्ठति मगधराजः ।

**भीमार्जुनौ** — हन्त निवृत्तः सन्देहः ।

**कृष्णः** — (नैपथ्यं प्रति) यद्येवं निवेद्यताममुष्मै कालसमागताः केचन स्नातकातिथयो द्रष्टुकामा इति ।

(नैपथ्ये)

इदं निवेद्यते ।

**कृष्णः** — तदत्रैव वयं मगधराजागमनं प्रतिपालयामः ।

(ततः प्रविशति निर्वर्तितनीराजनः कृतसन्नाहविधिर्गदापाणिः क्रुद्धो जरासन्धः, यथोचितव्यापारः परिजनश्च ।)

---

१. 'कुरुराष्ट्रं प्रति प्रतिष्ठासु' क.

२. 'महाराजः' क.

३. 'निर्वर्तितः' क.

जरासन्धः — (सरोषोत्कम्पम् )

मधुरिपुमथितेऽपि भोजराजे
न कदुरदीप्यत कोपधूमकेतुः ।
मम मनसि यथा तथाद्य माद्य-
त्कुरुकुलबालकदर्पजल्पितेन ॥ २८ ॥

तदचिरेण पाण्डुपुत्रा अनुभवन्तु मगधराजविरोधपरिपाकम् ।

(गदामुद्यम्यावलोक्य च) ।

संरम्भोत्तालतालध्वजभुजमुसलास्फालनोद्दीपिताश्रि-
श्रेणीपर्यन्तनिर्यच्छिखिकणकलिकारब्धनीराजनायाम् ।
यान्तु प्राणाः प्रणाशं मम समरमुखे भीमसेनस्य शत्रो-
रस्यां क्षोणीश्वराणां रणरणरणिकाभङ्गदायां गदायाम् ॥२९॥

श्रूयते च कोदण्डविद्यासु पण्डितम्मन्यो गाण्डीवी । (परिजन-मवलोक्य) धनुर्धनुः ।

(पुरुषः धनुरुपनयति ।)

जरासन्धः —

खेलद्वेतालरक्षःकलहकलकलाभीलकच्छोपकण्ठाः
कृष्यन्तः कायभारान् प्रलयघनघटासन्निभानामिभानाम् ।
मद्बाणव्रातकृत्तोद्भटसुभटमुखाम्भोजराजीविराज-
त्कल्लोलोल्लासभीमाः समरभुवमसृक्सिन्धवः क्षालयन्तु ॥ ३० ॥

प्रतीहारी — (स्वगतम् ) (क) अम्मो कुरुकुळणरिन्देसु जरासन्ध-देवेण आमरणन्तं वेरं णिब्बद्धमासि ।

जरासन्धः -- अहो दुरात्मनोर्वीरम्मन्ययोः कुरुकुलखेटयो-र्वाचाटत्वम् । 'क्रतुरपि सुकर' इत्यादि पठति ।

(क) अहो कुरुकुलनरेन्द्रेषु जरासन्धदेवेन आमरणान्तं वैरं निबद्धमस्ति ।

---

१. 'जमुसलहलास्फालनो' ब.

प्रतीहारी — (स्वगतम्) (क) परपरक्कमपरिभाविणो होन्ति वीरलोआ ।

जरासन्धः — तत् सर्वथा ।

गाण्डीविनं समरमूर्ध्नि शरैः प्रमथ्य
वन्ध्यं विधाय निजनाम युधिष्ठिरस्य ।
माद्यद्वृकोदरविमर्दमहोत्सवेन
निर्वाणमभ्युपगमिष्यति मागधेन्द्रः ॥ ३१ ॥

कियद्दूरे प्रस्थानवेला ।

(प्रविश्य मौ(हू)र्तिकः, पार्श्वतः पुरुषमवलोक्य च )

वातवेग ! गच्छ ब्रूहि सूताय सज्जीकृतं साङ्ग्रामिकं रथमुपस्थापयेति ।

पुरुषः — (ख) जं देवो आणवेदि ।

(इति निष्क्रान्तः ।)

(प्रविश्य)

काञ्चुकीयः — जयतु महाराजः । दूरादागताः केऽप्यलघुमहिमानो द्विजन्मानः ।

जरासन्धः — (अनाकर्णितकेन पुनस्तदेव गाण्डीविनमित्यादि पठति )

काञ्चुकीयः — ( स्वगतम् ) अत्यारूढप्रतिघनिभ्रान्तःकरणो महाराजः । भवतु, सविशेषं विज्ञापयामि । ( प्रकाशम् )

अद्वारेण गृहं प्राप्ताः स्नातकातिथयस्त्रयः ।

जरासन्धः — यथासुखमागच्छन्तु । सर्वथा सफलो मेऽद्य दिवसः ।

---

(क) परपराक्रमपरिभविनो भवन्ति वीरलोकाः ।

(ख) यद् देव आज्ञापयति ।

---

१. 'मपटिपन्थिणो होन्ति' ख.

२. 'तत् इति' खपाठे न ।

३. 'प्रविश्य' इति खपाठे न ।

काञ्चुकीयः —

आस्थानस्थाः प्रतीक्षन्ते देव देवस्य दर्शनम् ॥ ३२ ॥

जरासन्धः — हन्त[1]! कर्तव्ययोर्विप्रतिषेधे वर्तामहे । (विचिन्त्य) सर्वथा प्राणैरपि प्रीणनीया ह्यतिथयः । तदेतान् सम्भावयामि । (इत्युत्थातुमिच्छति) ।

(प्रविश्य सत्वरः)

सारथिः — आयुष्मन् !

मुखरकनककिङ्किणीकराल-
ध्वजपटपल्लवचुम्बिताम्बुवाहः ।
अयमलघुतुरङ्गहर्षहेषा-
प्रतिरवपूरितादिङ्मुखो रथस्ते ॥ ३३ ॥

तदारोहत्वायुष्मान्[2] ।

जरासन्धः — अयमहमारूढ एव भगवतो भूमिदेवानभिलषितेन तोषयित्वा ।

सारथिः — किञ्चिदन्यद् विज्ञाप्यमस्ति ।

जरासन्धः — ब्रूहि ।

सारथिः — आयुष्मन् ! रथवाजियोजनवेलायां

खलु तार्क्ष्यध्वजाभिख्यां स्यन्दनस्याशु सन्दधत् ।
क्रूरः पत्ररथः केतौ निलीयोदपतद् द्रुतम् ॥ ३४ ॥

जरासन्धः — (स्वगतम्) अहो क्रूरता निमित्तस्य । (प्रकाशम्) भवतु । सुकरप्रतीकारमेतत् ।

सारथिः — यथाज्ञापयत्यायुष्मान् । (इति प्रस्थितः ।)

जरासन्धः — (उत्थाय निमित्तं सूचयित्वा)

स्खलति चरणं वृन्तप्रान्ते विलंबिनि (वाससि? वासासि)
स्फुरणविधिना वामं चक्षुः गतिं प्रतिषेधति

---

१. 'हन्त' इति खपाठे न ।

२. 'तदात्वारो' क.

इदमपि विना हेतोश्चेतः कुतोऽपि विघूर्णते ।
किमभिलषितं दैवस्याहो निरङ्कुशरंहसः ॥ ३५ ॥

(निश्चित्य) तदेतद् दुर्निमित्तजातं भगवतां भूमिदेवानामातिथ्यकल्पनेन प्रशमसुपनयामि । (इति परिक्रामति) ।

काञ्चुकीयः— देव । इत इतः । इयमास्थानशाला । एतेऽप्यतिथयः ।

कृष्णः — (राजानमवलोक्य स्वगतम् )

किं मूर्तोऽयं रसानां प्रसरति निचयो वीररौद्राद्भुतानां

अर्जुनः — (स्वगतम्)

निःसीम्नां विक्रमाणां किमयमभिनवो रूपवान् सन्निपातः ।

भीमः — (स्वगतम् )

किं तावन्मर्त्यमूर्त्या जगति परिणतो गर्वसर्वस्वभारः

सर्वे — (स्वगतम्)

सोऽयं (चे ? द्वे)ष्टाप्यभीष्टः सुहृदिव हृदयं दानधृष्णुर्धिनोति ॥ ३६ ॥

जरासन्धः — (अग्रतोऽवलोक्य) दिष्ट्यानुगृहीतमिदमस्मद्भवनमतिथिपुरुषोत्तमसमागमेन ।

कृष्णः — (स्वगतम् ) किं परिज्ञातोऽस्मि ।

जरासन्धः — ( सविनयम् ) स्वागतमतिथिमुख्येभ्यः ।

भीमार्जुनौ — (स्वगतम्) अहो अतिथिसत्कारपारतन्त्र्यं बार्हद्रथस्य ।

कृष्णः — (स्वगतम्) नन्ववसरोऽयमाशीर्वादस्य । तदेवं तावत् । (प्रकाशम् )

भीमशत्रुकृतान्तस्य धर्मराजनिवेशनम् ।
प्रस्थितस्य महीपाल ! पन्थानः सन्तु ते शिवाः ॥ ३७ ॥

---

१. '(निश्वस्य)' ख.
२. 'प्रशमनं' ख.
३. 'अस्मादिति' खपाठे न ।

जरासन्धः — कृतार्थोऽस्मि ।

उभौ—(जनान्तिकम्) अहो आशीर्वाद[1]चातुर्यकौशलं केशिसूदनस्य । (राजानं प्रति) अस्य चिरन्तनस्य मुनेराशिषोऽभिप्रायः सिध्यतां (?) ते ।

जरासन्धः — [2]उपविशन्त्वमीष्वासनेषु । (सर्वे उपविशन्ति) ।

जरासन्धः — (कृष्णं निर्वर्ण्य स्वगतम्)

प्रायः सोऽयं नयनविषयं क्वापि मे प्राप्तपूर्वः

(अर्जुनमवलोक्य)

कस्याप्येष प्रकृतिसुभगो भाग्यभाजस्तनूजः ।

(भीममभिवीक्ष्य)

पीनस्कन्धः पृथु[3]नयनः कोऽप्ययं बाहुशाली

(समाधाय)

ये वा के वा वपुरनुचितं वेषमेते वहन्ति ॥ ३८ ॥

([4]निरूप्य) अपूर्वोऽयं स्नातकसमुदाचारः । यदद्वारेण प्रवेशः, सव्येन पाणिना यष्टिधारणं बहिर्वास्यत्वं च । भवतु अर्हणानन्तरं प्रष्टव्यम् ।

अर्जुनः — (स्वगतम्)

सोऽयं मायामनुष्यस्य प्रभावो भुवनप्रभोः ।
यद्रिपुर्निपुणोऽप्येनं न निश्चेतुं प्रगल्भते ॥ ३९ ॥

जरासन्धः — (कञ्चुकिनं प्रति) गच्छ ब्रूहि विमलमेधसे पुरोधसे ।

कञ्चुकी — देव ! किमिति ।

जरासन्धः — शीघ्रमागत्यातिथयो यथाविधानमर्हणीया (इत्यर्धोक्ते)

कृष्णः — मा मा मगधराज !

---

१. 'वादकौशलं' ख.

२. 'उपविशन्तामिहासनेषु' ख.

३. 'रत्नपमं' क.

४. '(निपुणं निरूप्य)' ख.

जरासन्धः — किं नार्हणयोग्या भवन्तः ।

कृष्णः — अयोग्यादर्हणग्रहणं प्रतिषिद्धं स्नातकानाम् ।

जरासन्धः — (स्वगतम्) अहो द्विजातेरौद्धत्यम् । यन्मामप्ययोग्यं प्रतिपादयति । सर्वथा वाचि क्षुरो ब्राह्मणस्येति सूक्तमेतत् । तदेवं तावत् । (प्रकाशम्) भो धर्मज्ञ ! ननु 'नाद्वारेण विशेत् क्वचिद्' इति विशेषतः स्नातकानां धर्मोपदेशः । तदुल्लङ्घनकारिणो यूयं योग्याः । बार्हद्रथः पुनरयोग्यः संवृत्तः ।

कृष्णः — बार्हद्रथ ! किन्तु, 'अद्वारेण रिपोर्गेहम्, (इति) अप्युपदेशः स्मर्यते ।

जरासन्धः — किं किम् । 'अद्वारेण रिपोर्गेह'मिति ब्रवीषि । तत् किमिह द्विजन्मनां शत्रुः ।

कृष्णः — न केवलं द्विजन्मनां, कृत्स्नस्यापि जगतः शत्रुरसि ।

जरासन्धः — तदेतद् भवन्तं पृच्छामि ।

अधीत्य वेदानवजित्य शत्रून्
मखैश्च सन्तर्प्य गणं सुराणाम् ।
प्रजाः प्रजासद्विधिना कथं वा
जायेत राजा भुवनस्य शत्रुः ॥ ४० ॥

कृष्णः — न खलु दोषमाचरन् दोषभागिनमात्मानं मन्यते । यतः —

करेण विकिरन् रेणून् कुञ्जरः कुम्भमण्डले ।
किमात्मनः पांसुलतादोषमेष विबुध्यते ॥ ४१ ॥

जरासन्धः — एवमपि ब्रूमहे । अदुष्टमपि दुष्टं पश्यन्ति दोषदृष्टयः । तथाहि —

---

१. 'नार्हणोचिता' ख.
२. अयोग्यार्हणग्रहणं' ख.
३. 'आम् बार्हद्रथ' ख.
४. 'स्मर्यते' इति कपाठे न ।
५. 'भगवन्तं' क.
६. 'भागी न मन्यते' ख.

महान्तमासाद्य निधिं यथा जनो
मषीमयं भाग्यवशेन पश्यति ।
स्वभावसीमानियतस्य वस्तुनः
किमेतदागेहति दोषकल्पनम् (?) ॥ ४२ ॥

कृष्णः — मा मैवम् । न वयमदुष्टदूषणशीलाः, किन्तु दुष्टं दूषयामह एव । तच्छृणु —

राजानो ननु भुवनस्य रक्षितार-
स्तेषां त्वं निधनविधानपातकेन ।
धर्मस्य प्रसभमुपप्लवं वितन्वन्
जानीषे कथमिव नात्मनः प्रमादम् ॥ ४३ ॥

जरासन्धः — (किञ्चित् सोपहासम्) अहो शास्त्रचक्षुषो वैचक्षण्यं भवतः । यद्राज्ञां शत्रुनिग्रहोऽप्यधर्म इति साम्प्रतमाकर्णयामः ।

कृष्णः — बार्हद्रथ ! न खलु शत्रुनिग्रहस्तावदधर्मः । किन्तु पराजितानां पुनः पशुमारं मारणमनाचरणीयं प्रतिपादयामः ।

जरासन्धः — ननु प्रमाणपूर्वं प्रतिपादय ।

कृष्णः — प्रतिपादने कस्तावत् पणबन्धः क्रियते ।

जरासन्धः — यस्तवाभिमतः ।

कृष्णः — यदि त्वमेव विवादे पराजयिसे कमप्यस्माकं मनोरथमवन्ध्यं करिष्यसि ।

जरासन्धः — बाढम् ।

१ 'महाजनो' ख.
२. 'दोषकत्थनाम् । ख.
३. 'दुष्टान्' ख.
४. 'एवं तत् शृणु' ख.
५. 'प्रथमं' ख
६. 'पुनः' इति खपाठे न ।
७. 'यसे तदा कमपि' ख.
८. 'मनोरथमप्यवश्यं करिष्यसि'

कृष्णः — तर्हि सत्यसङ्गरो भव ।

जरासन्धः — ननु नित्यमेव सत्यसन्धो जरासन्धः ।

तथा हि,

तपस्तर्पितशर्वस्य त्यागसन्तोषितार्थिनः ।
वपुरेव द्विधा भिन्नं न मे जिह्वा कदाचन ॥ ४४ ॥

भीमार्जुनौ — (स्वगतम्) भिन्नमेव भवतु भवतो वपुः ।

जरासन्धः — यद्यहं भवतो विजेता संवृत्तः, तदास्मत्प्रणीत-मर्हणमभिनन्दन्तु भवन्तः ।

कृष्णः — उपपन्नमेतत् । कस्मात्तदावयोर्विवादे निर्णेता कल्प-नीयः ।

जरासन्धः — ननु सर्वोऽप्यस्मदीयोऽत्रत्यो जनः । तन्नाहमत्र प्रमाणम् । (सर्वे तूष्णीं स्थिताः ।)

(प्रविश्य)

दौवारिकः — (क) जेदु भट्टा । देव सिस्सेण सद्धं अम्बरादो ओदरिअ दुवारदेसं उवट्ठिदो म(हे)सी णारदो ।

जरासन्धः — (श्रुत्वा सहर्षम् ।) किमुपस्थितो भगवान् कमलभवसम्भवः । तदविलम्बितं प्रवेश्यताम् ।

दौवारिकः — (ख) जं देवो आणवेदि । (इति निष्क्रान्तः ।)

(क) जयतु भर्ता । देव! शिष्येण सार्द्धमम्बरादवतीर्य द्वारदेश-मुपस्थितो महर्षिर्नारदः ।

(ख) यद् देव आज्ञापयति ।

१. 'तर्हि तस्य सत्य' ख
२. 'ननु सत्य' ख.
३. 'वपुरेतद् द्विधा' क.
४. 'तदस्मत्प्र' ख.
५. 'कल्पनीयः' इति खपाठे न ।
६. अपीति खपाठे न ।

कृष्णः — (स्वगतम्) काले खलु सम्प्राप्तस्तत्रभवान् विश्वविद्याविशारदो नारदः ।

भीमः — (अर्जुनं प्रति जनान्तिकम् ।) हन्त ईषच्छेषसङ्कल्पा[1] वयमन्तरागतेन नारदेन प्रकाशीक्रियामहे ।

अर्जुनः — स खलु भगवान् धर्मराजगुणपक्षपाती कार्यज्ञश्च नेदमुद्घोषयिष्यति[2] ।

(ततः प्रविशति नारदः शिष्यश्च ।)

नारदः — (स्वगतम्) साधु, सिद्धप्रायो मनोरथः । यत् कृष्णार्जुनसहायो भीमसेनः प्रच्छन्नो मगधराष्ट्रं प्रति प्र(स्थि)त इति भगवता द्वैपायनेन निवेदितं तत् कलहावलोकनकुतूहलादल्पीयसा कालेन महीयसीं गगनवीथीमतिवाह्य मगधराजमन्दिरोपकण्ठमवतीर्णोऽस्मि[3] । (हर्षमभिनीय ।)

धर्मात्मजस्य स मखः सुकरोऽस्तु मा वा
किं तेन मे मधुरिपोः खलु भार एषः ।
उद्दामभीममगधेश्वरसंविमर्द-
सन्दर्शनेन सफलश्रममस्तु चक्षुः ॥ ४५ ॥

शिष्यः — (श्रममभिनीय सशूत्कारम् ।) (क) हद्धि हद्धि । वक्कलकमंडलुकचाभारणीसहसरीरो एदेण जंघालएण महेसिणा सद्धं बंह्मण्डं परिब्भमिअ गाढं परिस्संतो ह्मि । ता सुठ्ठु एदस्सिं राअउले मुहुत्तअं वीसावम णुभविस्सम् । (परिक्रामतः ।)

---

(क) हा धिक् हा धिक् । वल्कलकमण्डलुकचाभारनिस्सहशरीर एतेन जङ्घालकेन महर्षिणा सार्धं ब्रह्माण्डं परिभ्रम्य गाढं परिश्रान्तोऽस्मि । तत् सुष्ठु एतस्मिन् राजकुले मुहूर्तकं विश्राममनुभविष्यामि ।

१. 'शेषसङ्कथा' ख.
२. 'उद्घाटयिष्यति' ख.
३. 'मन्दिरमव' ख.

नारदः — (पुरोऽवलोक्य) स एष खलु मगधराजः यो रणवीरो दानवीरश्च । (अन्यतोऽवलोक्य स्वगतम्) त एते स्नातकलाञ्छनच्छादितास्तरुविटपजालजटिला इव शाकुनिकास्त्रयोऽपि निगूढं वर्तन्ते । दिष्ट्या न तावत् सम्प्रहारः संवृत्तः । तदिदानीमयातयामेन समरामृतेन लोचने तर्पयामि । (उपसर्पति ।)

(सर्वे सविनयमुत्थाय यथोचितं कुर्वन्त्युपविशन्ति च ।)

कृष्णः — बार्हद्रथ ! वर्तताममुष्य भगवतः समक्षमावयोर्विवादः ।

जरासन्धः — बाढम् ।

उभौ—(प्रकृतं श्रावयित्वा) तदत्र विवादे भगवानावयोर्निर्णायकः ।

नारदः — (श्रुत्वा स्वगतम्) श्लाघ्योऽयं वाक्कलहोऽपि । एष खलु समरनाटकस्य[1] पूर्वरङ्गः । (प्रकाशम्) यदभिरुचितं महाभागयोः ।

जरासन्धः — (कृष्णं प्रति) भोः प्रस्तूयताम्[2] ।

कृष्णः — ननु प्रस्तुतमस्माभिः (इति पूर्वोक्तमभिधत्ते ।)

जरासन्धः — किं किम् । पुरुषपश्वालम्भनमनाचरणीयं ब्रवीषि । तदसमञ्जसम्[3] । यतः 'क्षत्राय राजन्यम्' इत्युपदेशः ।

कृष्णः — दत्तोत्तरमेतत्[4] प्राच्यैराचार्यैः ।

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।
मनुष्याणां समालम्भो न हि दृष्टः कदाचन ॥ ४६ ॥

इत्यादिना वचननिचयेन ।

नारदः — (श्रुत्वा स्वगतम्) साधु सु(दु)स्तरमुपन्यस्तम्[5] । यतो मधुपर्कपशूपालम्भनादिवदुपेक्षणीयः पूर्वपक्षः । (प्रकाशम्) भो मगध-

---

१. 'नाट्यस्य' ख.
२. 'भोः श्रूयताम्' ख.
३. 'तदिदं' ख.
४. 'कृतोत्तरमेतत्' ख.
५. 'दुष्करमुत्तरं' ख.

राज ! लभन्तामतिथयो वाञ्छितम् । न हि भवादृशेषु वन्ध्यसङ्कल्पा भवन्त्यर्थिनः ।

जरासन्धः — भगवन्ननुगृहीतोऽस्मि । अतिथिसन्तोष[1]लाभेन ।

शिष्यः — (क) णिग्गहस्थाने अणुग्गहं मण्णइ ।

अर्जुनः — अहो संवरण[2]नैपुणं मगधराजस्य ।

भीमः — (उरः[3] परामृश्य) हृदय ! किञ्चिदितैः परमपि निगूढं सहस्व[4] । शिथिलप्रायो[5] गुरुनियोगनिगलग्रन्थिः ।

जरासन्धः — (स्वगतम्)

विघ्नेन खिद्यते चेतः पात्रलाभाच्च तुष्यति ।
छायातपाभ्यामाश्लिष्टं पर्यायादिव पङ्कजम् ॥ ४७ ॥

(प्रकाशम्)

(तान् प्रति) वृणुत[6] भोः !

नारदः — (सर्वानवलोक्य स्वगतम्)

नरेन्द्रे निःशङ्कं वृणुत वृणुतेत्याततवचने
मुरद्वेषी दृष्टिं[7] वितरति मुखे पाण्डुसुतयोः ।
अथायं[8] नेत्राभ्यामनुवदति शौरिं सितहयो
भुजं भीमश्चक्षुरितमितयति हृष्यत्तनुरुहः[9] ॥ ४८ ॥

कृष्णः — बार्हद्रथ !

क्रतुरवानेभृतामनग्निसाध्यो
विजयफलो बलशालिनां विनोदः ।

---

(क) निग्रहस्स्थाने अनुग्रहं मन्यते ।

---

१. 'सन्तोषनियोगलाभेन' ख.
२. 'संवरणकौशलं' ख.
३. 'वक्षः परामृश्य' ख.
४. 'अतः परमपि निग्रहं' ख.
५. 'शिथिलितप्रायो' ख.
६. 'शृणुत भोः' क.
७. दृष्टीं वित' ख.
८. 'यथायं' ख.
९. 'रुहे' ख.

अशनिरघनगोचरः खलानां
श्रमणकरः समरः प्रदीयतां नः ॥ ४९ ॥

जरासन्धः — प्रियं नः प्रियं नः ।

नारदः — (स्वगतम्) हन्त ! श्रोत्रयोरयममृतसम्पातः ।

शिष्यः — (क) अम्मो बह्मणाणं अजुत्तकारित्तणं, जं राइणा सद्धं जुद्धं मग्गंति ।

अर्जुनः — साधु सिद्धः सङ्कल्पः ।

भीमः — (हर्षमभिनीय)

उद्दामयुद्धभरनिर्भरमागधेन्द्र-
वक्षःप्रघाणघनघट्टनकर्मठस्य ।
दोर्दण्ड रे ! बकहिडिम्बविमर्दसौख्य-
संख्यातिशायि तव काङ्क्षितमद्य सिद्धम् ॥ ५० ॥

जरासन्धः — (सहर्षं सखेदं च)

तदयमभिमतं मे प्रत्युत्तरैः सम्प्रहारः
प्रतिभटधुरमेते हन्त विप्रा वहन्ति ।
अमृतमथनकाले कालकूटप्रसूति-
स्त्रिभुवनमिव चित्तं दोषशङ्का दुनोति ॥ ५१ ॥

अहो मगधवंशस्य मान्निमित्तो दुर्यशःकलङ्कः । किं न सम्यगाराधितो भर्गः । कथमीदृशो मे पराक्रमस्य परिपाकः । धिग् बाहोर्भागधेयं यदनुकम्प्येपु परेष्विव प्रहरिष्यतः । (किञ्चिदुच्चैः)

आचारं निजमुज्झतां नरपतिः शास्तेति सम्प्रत्यदो
मा प्रास्तावि ज(नः ! नः) प्रवादविमुखे येनैष सम्भाव्यते ।

भीमः — (स्वगतम् !) सत्यमात्थ नरपतिः शास्तेति ! तदद्य ते दुराचारस्य धर्मात्मजानुजो भीमसेनः शासिता ।

(क) अहो ब्राह्मणानामयुक्तकारित्वं यद्राज्ञा सार्धं युद्धं मार्गयन्ति ।

१. 'संख्य' ख.
२. 'विचिन्त्य सहर्षं सखेदं च' ख.
३. 'संप्राप्यते' ख.

जरासन्धः —

हन्तव्या यदमी द्विजा मरणतोऽप्येष प्रवादो गुरुः
सङ्ख्ये सम्मुखतां गतः क इव मे शेषं लभेतायुषः ॥ ५२ ॥

(विचिन्त्य[1]) भगवन् देवर्षे! पश्यतु भवान्,

पात्रोपसदनेनापि यशोराशिरयं मम।
प्रासाद इव लग्नेन मधुजालेन दुष्यति ॥ ५३ ॥

तदत्र मे प्रत्यक्षीकृतसकलधर्मसीमानो भवन्तः प्रमाणम्।

हलधरपृथुवक्षःपीठसङ्घट्टचण्डः
प्रखरपरिघभीमः पाण्डवौ भीमपार्थौ।
समरशिरसि भङ्क्तुं बद्धसन्धः किमेष
प्रसरतु भुजदण्डः साम्प्रतं ब्राह्मणेषु ॥ ५४ ॥

नारदः — (स्वगतम्।) अहो इदं सङ्कटस्थानम्।

न ब्राह्मणेषु प्रहरेति वाच्यं
नैते मया क्षत्रमिति प्रकाश्याः।
युधो निषेधेऽपि महाननर्थो
न जातु माध्यस्थ्यमहो सुखाय ॥ ५५ ॥

(निश्चित्य) तदेवं तावत्। (प्रकाशम्।) उचितमेव भवतः पाण्डवेषु प्रतिवीरत्वम्। न पुनर्ब्राह्मणेषु।

जरासन्धः — का तर्हीदानीं प्रतिपत्तिः।

नारदः — (कृष्णं पश्यति।)

कृष्णः — (स्वगतम्।) किमेतः संवरणेन[2]। तदेवं तावत्। (प्रकाशम्) साधु[3] बार्हद्रथ! यदि इत्थं ब्राह्मणेषु सानुक्रोशो वर्तते तेन प्रीतः तवापि प्रार्थितं प्रत्युपहरिष्यामि। किं ब्रवीषि।

नारदः — (स्वगतम्) साधु[4] निक्षिप्तभारोऽस्मि।

---

१. 'निश्वस्य' ख.
२. 'अतः परं संवर' ख.
३. 'साधु' इति खपाठे न.
४. 'साधु' इति खपाठे न.

जरासन्धः — किं तावत् । प्रार्थितं प्रत्युपहरिष्यामीति ब्रवीषि । तदिदमसमीक्ष्यकारित्वं भवतः । न हि कदाचिदपि बार्हद्रथः परान् प्रार्थयते ।

नारदः — भो बृहद्रथतनय ! साम्प्रतं किञ्चिन्मयानुशास्योऽसि ।

जरासन्धः — ननु शिष्योऽस्मि ।

नारदः — तर्हीदं शृणु ।

वरं नृपेभ्यो ददते द्विजातयो
यथा हि पित्रे तव चण्डकौशिकः ।
अतो भवांश्च प्रतिषेद्धुमर्हति
प्रसादमेषां द्युसदां महीस्पृशाम् ॥ ५६ ॥

जरासन्धः— यद्येवं शृणुमस्तावद् । अलङ्घनीयो गुरुनियोगः । इदमिदानीं प्राप्तकालं किमपि प्रार्थ्यते ।

भीमः — (स्वगतम्) प्राप्तकालमेव प्रार्थय ।

जरासन्धः — (स्वगतम् ।) धिक्कष्टमहमपि कार्यवशाद् (आज्ञा ! याच्ञा)रसज्ञः संवृत्तः ।

'म्रियमाणस्य चिह्नानि यानि तान्येव याचके' ।

इति सत्यमवगीयते ।

तथा हि मम,

वाक्यमोष्ठपुटन्यस्तं त्रपया तरलीकृतम् ।
पुष्पं शाखिरिवोच्छिन्नं जिह्वा संहरति स्वयम् ॥ ५७ ॥

---

१. 'स्वगतम्' इति खपाठे ।

२. 'कालं प्रति' क.

३. 'सत्यमेव गीयते' क.

४. 'तथा हि मम' इति खपाठे नास्ति ।

(कथञ्चिदनुसन्धाय प्रकाशम्)

गन्धर्वैर्वा भुजगपतिभिर्दैवतैर्दानवैर्वा
रक्षोभिर्वा प्रमथपतिभिर्दिग्गजैर्भूमिपैर्वा ।
व्यस्तैरेभिर्युगपदथवा युष्मदिच्छानुरूपं
योद्धुं वाञ्छाम्यपि भृगुपतौ न प्रहर्तास्मि विप्रे ॥ ५८ ॥

नारदः — सदृशमेतद् भवतः ।

कृष्णः — न खलु वयं मगधराजस्य वाञ्छानुकूलाः ।

जरासन्धः — यद्येवं यैः समराङ्गणमवतरामि ।

कृष्णः — नन्वस्माभिरेव ।

जरासन्धः — मदभिहितेषु कतमे भवन्तः ।

कृष्णः — यतमो भवान् ।

जरासन्धः — अपि यूयं क्षत्रियाः ।

कृष्णः — यथावगतं बार्हद्रथेन ।

जरासन्धः — विशेषं श्रोतुमिच्छामि ।

कृष्णः —

अयमनिलसुतस्ते यश्चिराद् योद्धुमिष्टः
कुपितबकहिडिम्बध्वंसनो भीमसेनः ।
अयमपि कपिकेतुर्धूमकेतुः परेषां
तव रिपुरभियोज्यो मध्यमः पाण्डुपुत्रः ॥ ५९ ॥

(जरासन्धः हर्षमभिनीय भीमार्जुनौ पश्यति ।)

नारदः— (सर्वानवलोक्य) सर्वथा सर्वस्यापि रसान्तरेष्वस्वतन्त्र-मन्तःकरणं भविष्यति । तथाहि,

---

१. 'कांक्षिता' ख.

भुत्वा पार्थाविति विकसितं श्लाघ्यतां वीक्ष्य यो(दुधुं ?दुधुः)
साध्यं सिद्धं स्वयमिति मुहुः स्वीकृतं विस्मयेन ।
गेहं प्राप्ताविति शमपरं द्वेषिणावित्यगाध-
क्रोधाक्रान्तं प्रतिपदमिदं मानसं मागधस्य ॥ ६० ॥

अपि च,

भीमे भुजद्रविणदुर्मदवीरलोक
विश्रामधाम्नि बहुमानविशेषगर्भाः ।
गाण्डीवधन्वनि पुनर्निपतन्त्यमुष्य
द्राग् दृष्टयः स्फुरदनादरभिन्नभावाः ॥ ६१ ॥

जरासन्धः — (सहर्षामर्षगर्वम्[1]) दिष्ट्या भवान्[2] सानुक्रोशो व्योमकेशः । यदत्रैव प्रार्थितपदार्थसमवायः सन्निधत्ते सोऽयमनभ्रो वृष्टिपातः ।

भीमः — (स्वगतम्) सोऽयमनभ्रो वज्रपात इति ब्रूहि ।

जरासन्धः — (कृष्णं प्रति) भो विचक्षण 'मध्यमः पाण्डुपुत्र' इति निरवद्यमिदमवादीः[3] । यतः नायमुत्तमोऽनतिपरिणतपराक्रमत्वात् नाप्यधमः कौरवत्वात् । अतो मध्यम एव ।

कृष्णः — वृथाजल्प जरासन्ध ! किमतः परं पराक्रमस्य परिणतिरस्ति ।

राजन् ! दोर्दण्डदर्पद्रवमुषि धनुषि व्यापृतोच्चण्डबाहौ
वीरे निर्याति तूर्णं त्वयि चलचरणं क्षोणिपृष्ठे लुठित्वा ।
निर्विघ्नं विक्रमाणां शिरसि निजभुजद्वन्द्वमाधाय तत्र
प्रत्यक्षं क्ष्मापतीनां कलय बलवता[4] स्वीकृता केन कृष्णा ॥ ६२ ॥

---

१. 'सहर्षगर्वं' ख.
२. 'भगवान्' क.
३. 'निरवद्यमवादीः' ख.
४. 'बकवता' ख.

जरासन्धः — चिरात् कलितमस्माभिः पूर्वमेकेन फल्गुनेन पश्चात् सर्वैरेव भ्रातृभिः स्वीकृता कृष्णेति ।

कृष्णः — न हि रजोदूषितचेतसः सूक्ष्मधर्मचक्षुषो भवन्ति भवादृशाः । साध्विदमभिहितवानसि यददुष्टं दुष्टं पश्यन्तीति ।

जरासन्धः — अथवा त्वं पाण्डवानुचरो वार्ष्णेयः ।

अर्जुनः — युक्तमुक्तम् । पाण्डवानुचर एवायं, यदस्य वशे वयं वर्तामहे । साध्वी प्रत्यभिज्ञा ते । यतः,

त्वद्गर्वकालकूटोग्रज्वालासंहारशूलिनः ।
कृष्णः सङ्कर्षणस्यैष सोदर्यः कंसकर्षणः ॥ ६३ ॥

जरासन्धः — रे रे ! कंसकर्षण इति मत्पुरत इदानीं श्लाघ्यते । पश्य ,

सामग्रीं साम्प्रतं यत् प्रथयति मथुरा विन्ध्यकान्तारभूमे-
रन्तर्गोमन्तसत्रं चिरमचरदयं यच्च साकं किरातैः ।
किञ्चान्यद्बिभ्रतीमे जलमनुजदशां सर्वदाशार्हवीराः
पर्याप्तः किं न कंसोन्मथनविधिमहापातकस्यैष पाकः ॥ ६४ ॥

(विहस्य) 'एकः पापानि कुरुते फलं भुङ्क्ते महाजनः' इति सत्यमुदाह्रियते । यदस्य कृते सर्वे वृष्णयः समुन्मूलिताः ।

अर्जुनः — अहो महीपतेरर्थशास्त्रार्थपारगत्वं यद्विजिगीषोर्दुर्गसङ्ग्रहणं गर्हयसि । किं न वेत्सि मुरनरकबाणचाणूरकंसकालिययवनप्रभृतिदुर्दान्तभञ्जनजनितभयविस्मयानि जनार्दनस्य चरिताद्भुतानि ।

---

१. 'ननु चिरात् ' ख.
२. 'साधु' इति ख पाठे न.
३. 'यददुष्टमपि दुष्टं' ख.
४. 'अथ त्वं' ख.
५. 'वयम्' इति खपाठे न.
६. 'साध्वी च प्रत्य' ख.
७. 'अपि च किं न' ख.
८. 'भञ्जनविस्मयानि' ख.

जरासन्धः—जानामि जानामि । सर्वथाद्भुतान्येव चरितानि; यदस्य सर्वाण्यपि दुर्गीभवन्ति ।

वर्षोत्कर्षे यदजनि दरी धाम गोवर्धनाद्रेः
पाथोराशिर्यदपि शरणं मागधे क्रोधभाजि ।
दुर्गद्वन्द्वं भवतु तदिदं यत् पुनर्मौचुकुन्दः
पर्यङ्कोऽपि द्रुतमधिगतो दुर्गतां तद्धि चित्रम् ॥ ६५ ॥

अर्जुनः—युज्यते । सूतसुतखण्डितपराक्रमप्रसरस्य तवायं उरुक्रमतिरस्कारः ।

जरासन्धः—अहो मन्दबुद्धेरनिरूपितकथनम् ।

न तुलामेति राधेयो यस्त्वयापि लघीयसा ।
किं तेन निगृहीतेन त्रिजगज्जयिनो मम ॥ ६६ ॥

भीमः—किं किम् । लघीयानिति कुमारफल्गुनमाधिक्षिपसि । शृणु रे !

कुपितकुलिशपाणिप्रेरिताकाण्डचण्ड-[2]
प्रलयजलदजालोद्घूर्णनोद्गीर्णमर्णः ।
विशिखशरणभङ्ग्या[3] भङ्गुरीकृत्य येन
द्रुतमतिथिसपर्यां लम्भितो हव्यवाहः ॥ ६७ ॥

तदवमानापराधी त्वमद्य मद्भुजभुजङ्गमग्रस्तो जीवनाशं नश्यसि । न हि कुपिते भीमसेने जीवन्ति विद्विषन्तः ।

जरासन्धः—रे रे वृथाविकत्थन वृकोदरहतक ! किं न कुपिते भीमसेने जीवन्ति विद्विषन्तः । तद् ब्रूहि,

१. 'अद्भुतान्यस्य चरितानि' ख.
२. 'प्रेरिताखण्डचण्ड' ख.
३. 'विशिखगणम' ख.

पृष्ठबद्धप्रकोष्ठस्त्वं यैर्बाहुभ्यां निपातितः ।
तद्वैरं क्रूरमुत्पाद्य किं न जीवन्ति कौरवाः ॥ ६८ ॥

भीमसेनः—(सरोषोत्कम्पम्) किं नाम कुरुकुलज्येष्ठस्य युधिष्ठिरस्य नियन्त्रणानुरोधादुपेक्षितधार्तराष्ट्रं मां कदर्थयसि । तन्न खलु वयं भवज्जामातृवद् गुरुजनपरिपन्थिनः ।

जरासन्धः—अस्ति भवतां ज्येष्ठभ्रातरि लोकोत्तरो भक्त्यतिरेकः । कथमन्यथा फल्गुनेन स्वकलत्रार्पणमाचरितम् । (विचिन्त्य सोपहासम्) इदमपि धर्मात्मजस्य कुलधर्मानुसरणनैपुणम् । तथाह्येतेन

जानता जननीवृत्तं पञ्चोपपतिपारगम् ।
याज्ञसेन्यपि यत्तस्याः साधर्म्यमधिरोपिता ॥ ६९ ॥

भीमः—(ससंरम्भम्) रे रे ! पुरुषोप[1]हारपाषण्ड ! समयदीक्षितक्षत्रियघातपातकिन् ! मगधवंशविषपादप ! कृष्णास्वयंवरकोदण्डजर्जरितजङ्घाकाण्ड ! राधेयविधेय ! कामपालपलायिताभिमान ! युधिष्ठिरापराधिन् ! मधुमथनावमानदुर्ललितदुराचारचतुर ! अनाधिगतधर्मत[2]त्त्वविधुरमतिर्गुरूनपि परिवदसि । तदहमचिरेण

गुरुतरयमदण्डोच्चण्डदोर्दण्डघातै-
र्विघटितविकटोरःपीठघाटाललाटम् ।
वदननयनघोणागह्वरोद्गारिघोर-
क्षतजकपिशितं त्वामन्तकाया[3]र्पयामि ॥ ७० ॥

(इत्युत्तिष्ठति ।)

१. 'पहारघातपाषण्ड' ख.
२. 'तत्त्वगुरू' ख.
३. 'अर्चयामि' ख.

कृष्णः—(दृष्टिक्षेपेण वारयित्वा) न खल्वनिर्धारितवीरप्रतिवीरसमयं द्वन्द्वयुद्धं प्रशंसन्ति ।

जरासन्धः—भगवन्! देवर्षे! अनुजानीहि माम् । नातः परमप्रियाणामहं सोढा ।

नारदः—भो वीरवृन्दिष्ठ! ननु धर्म्यस्तवायं विधिः । अनुज्ञात एव । यतः,

ललाटनिःसृतं रक्तं रञ्जयत्यधरं यदा ।
सङ्ग्रामयज्ञे तद्राज्ञां सोमपानमिति स्मृतिः ॥ ७१ ॥

जरासन्धः— धन्योऽस्मि ।

शिष्यः—(क) अम्भो! महेसिणो क[1]लहवड्ढणवेअड्ढम् । मम उण एदाणं वअणसंभमेण उब्भन्तं विअ हिअअम् ।

कृष्णः—भो मगधराज! त्रयाणामस्माकं कतमस्ते रोचते प्रतिवीरः ।

जरासन्धः— (सजुगुप्सम्) द्वयोरिति वक्तव्ये त्रयाणामित्यात्मानमपि मया सह सम्मर्दक्षमं निर्दिशसि । त[2]दिदमसाम्प्रतम् । यतः,

नाहं बाणो न खलु नरको नापि केशी न कंस-
श्चाणूरो वा न च स(डिभको ! हि बको) नाप्यरिष्टो न हंसः ।

(क) अहो! महर्षिणः कलहवर्धनवैदग्ध्यम् । मम पुनरेतेषां वचनसम्भ्रमेण उद्भ्रान्तमिव हृदयम् ।

१. 'कलहप्पाडवेअड्ढं' ख.
२. 'तदेव सांप्रतम्' ख.

शत्रुक्षत्रक्षपणनिपुणोत्तालकालाग्निरुद्र-
श्चक्षुर्लक्षीकृतपुरहगो नन्वहं मागधेन्द्रः ॥ ७२ ॥

ततश्च,

गोपाल! त्वमपि पलायितः पुरस्ताद्
(अर्जुनं प्रति)
डिम्भोऽसि त्वमपि सिताश्व! तिष्ठ दूरे ।
(भीमं प्रति)
द्वित्राणां मम भुजरंहसां विसोढा
त्वं भीम! प्रहरणमीप्सितं गृहाण ॥ ७३ ॥

भीमः — ननु सुभटसङ्घसङ्घट्टनोद्भटभुजपरिघसाधनो भीमसेन-स्त्वादृशेषु किमायुधान्तरमपेक्षते ।

जरासन्धः — प्रियं नः, प्रियं नः । (नारदं प्रति) भगवन्! गृहागतं विद्विषमपि न क्रूरेण चक्षुषा वीक्षेतेति नीतिवादः । तदेषामर्थिभाव एव मामतिक्रान्तमर्यादं करोति ।

नारदः — बार्हद्रथ!
कृतापराधान् स्वगृहेऽप्यरातीन्
जिघांसतो नास्ति नृपस्य दोषः ।
उपागतान् हन्ति गुहोपकण्ठं
कण्ठीरवः किं न करीन्द्रयूथान् ॥ ७४ ॥

जरासन्धः — शृणुत भोः! सम्प्रति जरासन्धस्य रिपुनिपाताभिज्ञां प्रतिज्ञाम् । (भीमसेनं प्रति)

चूडागाढनिविष्टमुष्टिविवशव्याभुग्नकण्ठस्फुट-
द्वक्षःकन्दरमग्नमस्तकगलन्मस्तिष्कलिप्तेन ते ।

१. 'गोपालस्त्वमसि' ख.
२. 'गृहान्तरं गतं विद्विषन्तमपि' क.
३. 'ननु बार्हद्रथ' ख.

गात्रेणाहमकृत्रिमोल्बणमहामांसच्छटाविक्रय-
क्रीडाडम्बरमाचरामि समरे नक्तञ्चरेभ्यश्चिरम् ॥ ७५ ॥

भीमः — (कृष्णार्जुनाववलोक्य) वयस्य वृष्णिवीर! वत्स धनञ्जय! इदमुत्थीयते । [1]सम्प्रत्यवसरः पौरुषस्य ।

कृष्णः — निष्प्रतिवीरं वीर(य)स्व ।

अर्जुनः — [2]विजयिनं त्वां पश्येयम् ।

भीमः — (उत्थाय) निभृतं वयस्यवत्साभ्यां स्थीयताम् । (कतिचित् पदानि गत्वा) भगवन् ब्रह्मसम्भव! नमस्ते ।

जरासन्धः — (अञ्जलिं बद्ध्वा) भगवन्! प्रणामः प्रतिगृह्यताम् ।

(इत्युभौ प्रणमतः ।)

नारदः — विजयकीर्तिभाजनं भवेतां भवन्तौ । (उभावुत्थाय [3]परिकरं रचयतः ।)

जरासन्धः — एष सज्जोऽस्मि । [4]सज्जीभव ।

भीमः — ननु [5]नित्यमेव सङ्ग्रामसज्जो भीमसेनः ।

जरासन्धः — तदितः सकलगीर्वाणगन्धर्वयक्षराक्षसदनुजलोक-[6]लोचनमहोत्सवायमानसमरसम्भवसमुचितमल्लयुद्धाक्षवाटमवतरावः ।

भीमः — बाढम् । (इत्युभौ साटोपं निष्क्रान्तौ ।)

---

१. 'ननु संप्रत्य' ख.
२. 'जयिनं' ख.
३. 'परिकरं बद्ध्वा' ख.
४. 'सज्जीभव' इति खपाठे न.
५. 'सत्यमेव' क.
६. 'लोचनोत्सवा' ख.
७. 'समरसंरम्भसंमर्दितमल्ल' ख.

(नैपथ्ये महान् कलकलः । सर्वे आकर्णयन्ति ।)

शिष्यः — (ऊर्ध्वमवलोक्य) (क) भो पेक्ख पेक्ख । सिद्धगन्धव्वगिव्वाणचारणच्छराजक्खरक्खससमूहेहिं निखआसं आआसं संवुत्तम् । एदाणि दाणि दीसन्ति सुमेरुसिहरप्पमाणाणि विमाणाणि । अदूरे धरणिपुट्ठस्स वट्टइ समग्गो सग्गलोओ ।

नारदः — (सविशेषमवलोक्य) अस्मदिच्छानुकूलः कालो वर्तते । तथाहि —

पर्याप्तः प्रसभादपि त्रिजगतः प्राभञ्जनिर्भञ्जने
सङ्ख्ये केनचिदप्यहो न हि जरासन्धोऽतिसन्धीयते ।
द्वावेतावपि सङ्गराङ्गणगतावित्युत्सुकाः प्रेक्षितुं
दूरोत्सारितखेचरा दिवि पदं कुर्वन्ति नाकौकसः ॥ ७६ ॥

कृष्णः — एवमेतत् । यथाह भगवान् द्रौहिणिः ।

अयमवनिपतिर्नः काङ्क्षितः कान्तकृत्ये
ननु सुचिरवृतोऽयं मागधोऽस्माभिरिष्टः ।
इति सुरगणिकानां लब्धयात्रोत्सवानां
कलितकलहकेलिर्जृम्भते सम्भ्रमश्रीः ॥ ७७ ॥

अर्जुनः — अहो निरर्थकोऽपि संवादः सर्वत्र पदं कुरुते । तथाहि—

(क) भोः पश्य पश्य । सिद्धगन्धर्वगीर्वाणचारणाप्सरोयक्षराक्षससमूहैर्निरवकाशमाकाशं संवृत्तम् । एतानीदानीं दृश्यन्ते सुमेरुशिखरप्रमाणानि विमानानि । अदूरे धरणिपृष्ठस्य वर्तते समग्रः स्वर्गलोकः ।

अक्षामः क्षमते हिडिम्बदमनो बार्हद्रथं बाधितुं
प्रागल्भ्यं मगधाधिपोऽपि कुरुते भङ्क्तुं बकद्वेषिणम् ।
एवं तावदुपक्रमेषु मृदवः क्रूरीभवन्त्यः क्रमा-
दन्योन्यं प्रसरन्ति गुम्फितगुणाः खे खेचराणां गिरः ॥७८॥

(नैपथ्ये पुनः कलकलः ।)

अर्जुनः —

निर्घातोग्रः कराग्रादपि कमलभुवः पातयन्नम्बुपात्रीं
गौरीकण्ठीरवस्य प्रतिरसितशतैः स्पष्टमुद्ग्राह्यमानः ।
कल्पापायाम्बुदानामपि परिलघयन् सम्भ्रमाडम्बराणि
ब्रह्माण्डस्फोटचण्डस्तिरयति ककुभः कोऽपि निर्घोष एषः ॥७९॥

कृष्णः — लीलावलयितसुरकुञ्जरकरपीवरं बहुमण्डलमास्फालितं भीमेन ।

शिष्यः — (क) सुणह इदो वि अण्णो । संखोहिअसमुद्दो णिम्महिअमहुमहणणिद्दो उप्पहप्पहाविअमिहिररहतुरंगमो भमिअपाआलभुजंगमो णिअदलिअसअलमहिद्धरन्धो सिढिलिअधरणिपेढबंधो णिज्जिअपलअपज्जण्णणिग्घादडंबरो विमाणभित्तिपडिअपडिरवभमं(वि ? मि)अंबरो विम्मरिअदिसाकरिंदकण्णआलो भुवणविणासभअविहुरलो-

(क) शृणुत इतोऽप्यन्यम् । संक्षोभितसमुद्रो निर्मथितमधुमथननिद्र उत्पथप्रधावितमिहिररथतुरङ्गमो भ्रमितपातालभुजङ्गमो निर्दलितसकलमहीध्र-रन्ध्रः शिथिलितधरणिपीठबन्धो निर्जितप्रलयपर्जन्यनिर्घातडम्बरो विमानभित्ति-पतितप्रतिरवभ्रमिताम्बरो विस्मारितदिशाकरीन्द्रकर्णतालो भुवनविनाशभयविधुर-

१. 'मथनो' ख.
२. 'अम्बुपात्रं' ख.
३. 'लीलापलायित' ख.
४. 'भयभरिअंबरो' ख

अपालो झंतिचकिअच्छरगणालिंगिदगयणचरजूआणो पडिअसुभटभुअ-किवाणो मुणिअमहामल्लसम्मद्दो पवट्टइ महंतो सद्दो ।

नारदः — सम्यगवहितं वत्सेन । तथाहि —

ब्रह्माण्डस्यान्तकाले द्रुतमिव दलतश्चण्डमार्ताण्डतापा-
त्तीव्राद्दौर्वाग्निदाहात् स्फुटदुरुदृषदां पर्वतानामिवोग्रः ।
व्यारुग्णक्षोणिभारातुरकमठपतिस्फारपृष्ठास्थिमाठी-
पीठप्रस्फोटकल्पः कबलयति रवः कोऽपि काष्ठाः कठोरः ॥८०॥

तत् सर्वथा कुटिलीकृतकार्कोटकभोगि[1]भङ्गभीषणं निजदोर्दण्डमण्डलमा-स्फालितं जरासन्धेन ।

शिष्यः — (अन्यतोऽवलोक्य) (क) भो इदो पेक्खह । अणग्ग-लुग्गलन्तमदसलिलधारापवट्टिअधरणीरेणुवारणेहिं वारणेहिं तक्खणक्कं-तवाहवारजणिअजवतुलिअगन्धवाहेहिं वाहेहिं तुरिअतुरग्गलंघणसफली-कअसारहिमणोरहेहिं रहेहिं परसुचक्ककोअंडभिंडिपालमंडलग्गलग्ग-मुट्ठिणिट्ठुरभुअदंडसाहसुब्भडेहिं भडेहिं सव्वदो समु(त्थु ? क्खु)ब्भइ दंसिअजुअप्पवुत्ती[2] धरित्ती ।

लोकपालो झटितिचकिताप्सरोगणालिङ्गितगगनचरयुवा पतितसुभटभुजकृपाणो ज्ञातमहामल्लसम्मर्दः प्रवर्तते महान् शब्दः ।

(क) भो इतः पश्यत । अनर्गलोद्गलन्मदसलिलधाराप्रवर्तितधरणि-रेणुवारणैर्वारणैः तत्क्षणाक्रान्तवाहवारजनितजवतुलितगन्धवाहैर्वाहैः त्वरित-तुरङ्गलङ्घनसफलीकृतसारथिमनोरथैः रथैः परशुचक्रकोदण्डभिण्डिपालमण्डला-ग्रलग्नमुष्टिनिष्ठुरभुजदण्डसाहसोद्भटैः भटैः सर्वतः संक्षुभ्यति दर्शितयुगप्रवृ-त्तिर्धरित्री ।

१. 'भोग' ख.
२. 'जअपरिवुत्ति' ख.

नारदः — (विचिन्त्य) भवतु विज्ञातम् । तदेतद् युद्धं युद्धमिति तूर्णमाकर्ण्य ससम्भ्रमोद्घूर्णनातिरस्कृतमहार्णवप्रवाहं सन्नद्धं मगधराजसैन्यमित एवाभिवर्तते ।

कृष्णः —(पुरोऽवलोक्य) अहो प्रागल्भ्यं बृहद्रथसुतवरूथिनीमण्डलस्य । यतः,

सम्मूर्च्छितसमदचमूमतङ्गजानां
क्ष्माचक्रं चरणभरेण दूरनम्रम् ।
उद्वोढुं कथमपि दिग्गजाः क्षमन्ते
व्याभुग्नोन्नमदुरुकन्धरैः शिरोभिः ॥ ८१ ॥

अर्जुनः — (ससम्भ्रमम्) वयस्य वासुदेव! किमावयोरायुधग्रहणवेला वर्तते ।

कृष्णः — न हि द्वन्द्वयुद्धसीमानभिज्ञो जरासन्धः ।

नारदः — एवमेतत् । न युगान्तमन्तरेण दहति दिनकरो जगन्ति ।

(नैपथ्ये)

किं किं स्यन्दनडम्बरेण रथिनः! स्थेम्नाध्वम् आधोरणाः!
दूरे सीदत सादिनः! किमिह वः सम्पत्तयः पत्तयः!।

सर्वे — साधु जरासन्ध! साधु । सत्यसन्धः खल्वसि ।

१. 'भवतु तावत् जातं तदेव' ख.
२. 'युद्धमिति तूर्णं' क.
३. 'उद्घूर्ण तिरस्कृत' क.
४. 'सन्नद्धमगध' क.
५. 'कथमिव' ख.
६. 'युद्धप्रकारसीमा' ख.

(पुनर्नेपथ्ये)

एकः स्तोकपराक्रमो रिपुरयं हन्तव्यकाष्ठां गतः
प्रोत्क्षेप्तुं स्वभुजावपीह मम धिग् व्रीला समुन्मीलति ॥ ८२ ॥

सर्वे—अहो! मगधराजस्याज्ञायां समग्रं सङ्ग्रामसाधनमपि चित्रनिर्मितमिव निष्पन्दयोधवृन्दमवतिष्ठते ।

(पुनरन्यतोऽपि नैपथ्ये)

राजन्[1]! मागध! मा गमः सम्भ्रमं कालानलग्रासतां
मुञ्च क्षोणिपतीन् पुटीकुरु करौ किञ्चित् किरीटोपरि ।
तस्मै त्वं कुरुजाङ्गलाधिपतये यो जाङ्गलीकायते
त्रातुं भीमभुजाभुजङ्गमुखात् तान्[2] धार्तराष्ट्रानपि ॥ ८३ ॥

सर्वे—साधु वृकोदर! साधु । युक्तमजातशत्रुसोदर्यस्य तवेदं व्याहृतम् ।

(नैपथ्ये)

रे रे! दुर्वचनमुखर! मूर्ख! कुरुकुलपांसन! दुराचारनिशाचरीकामुक! क्षुद्रनरश्वापिशाचदमन[3]! दुर्ललितसुयोधनविधेयक! भूर्भुवःस्वस्त्रयीविजयिनं जरासन्धमपीतरलोकसाधारणं कलयसि । तदेष प्रहन्यसे[4] ।

अर्जुनः—हन्त! परस्पराधिक्षेपदीपितकोपानलज्वलितचेतसोः पुरःप्रसारितबाहुपरिघयोरन्योन्यस्थानकनिविष्टनिर्निमेषचक्षुषोरार्यजरासन्ध-

१. 'हंहो मागध' ख.
२. 'तान्' क.
३. 'मपि नरलोक' ख.
४. 'प्रहन्यते' ख.

योर्निष्प्रतिबन्धः समरसंरम्भः संवृत्तः । तद्वयमप्यार्यस्याशिष्टता-तये समराङ्गणनिकटवर्तिनो भवामः । यतः,

स्वहस्तसाध्येऽपि जनस्य कर्मणि
प्रहर्षहेतुः सुहृदां समागमः ।
लघूकरोत्याशु निदाघमुल्बणं
समीरणो लब्धधवित्रधूननः ॥ ८४ ॥

सर्वे — तथा । (इति परिक्रामन्ति ।)

कृष्णः — (पुरो निर्दिश्य) अहो नु खल्वनयोरनियतजयपराजय-मखिललोकविस्मापनमनुज्झितमल्लयुद्धसमयमाचेष्टितम् । तथाहि —

निर्धूतदन्तदलनं नितरां निरस्त-
केशग्रहं नखविलेखनमार्गशून्यम् ।
घोणाभिघातविमुखं रहिताक्षिरोधं
चित्रं प्रवृत्तमुभयोर्भयदं नियुद्धम् ॥ ८५ ॥

अर्जुनः — एवमेतत् । तथाह्यनयोः

आकर्षणभ्रमणचारविकर्षणानि
संरोधनिष्क्रमणरक्षणवञ्चनानि ।
संव्यूहनोद्वहनवेष्टनवेल्लनानि[1]
सम्मोहयन्ति नयनैः सह मानसं नः ॥ ८६ ॥

नारदः — (विलोक्य सहर्षम्) दिष्ट्या साम्प्रतमवन्ध्यः संवृत्तः प्रजापतेरसमन्वयननिर्माणयत्नः । यदनयोरस्मदग्रत एव,

निबिडगरुडपक्षा[2]क्षेपवित्रस्तलोकं
कलितधवलशङ्खं प्रस्फुरच्चापयष्टि ।

१. 'संव्यूहनोपहनवेष्टन' क.
२. 'पक्षं' ख.

घटितकमलकेलि स्तम्भितक्ष्माभृदुच्चै-
श्चरितमिव मुरारेः शोभते[1] मल्लयुद्धम् ॥ ८७ ॥

शिष्यः—(क) भो पेक्खह[2] पेक्खह । सअलगिरिकडयप्फोडयपडिसद्दणिद्दअप्फालिअमण्डलं णीसंगसमंगीकअबहुमग्गवग्गणं गलगुहाणिरुद्धसंदंसद्दणिसंदअं अण्णोण्णदंसिअसिखोघडिज्जमाणपाडिमोडिसीसकरवलचयुट्ठाणअप्पाडिट्ठाग्गणअविभज्जमाणविण्णाणविसेसअं अण्णोण्णवंचणाविह्माविदसअललोअं उब्भडगरुडपक्खपरवसोणामिअमत्थअं वेसणीवेल्लणणिरुद्धपडिमल्लभुअमण्डलं सकुडुम्बढोक्कारविण्णाणणिप्पडिअहत्थमत्थआपेडणं णीरन्धसंदंसिअबाहुपीडणं[3] ढोक्काराढत्तवुप्पकच्छाअड्ढणं कक्खपडपरिवेसज्जिदपादभंजणं कुम्मरीकप्पिदसव्वंगपीडणं चडुसीविण्णाणं मुणिअबाहुमोडणं गुणालविण्णाणघडिदजंघाणाहिमंडलं णिरुद्धपडिवक्खभुअसंधिमत्थअं उत्तरढोक्कारवित्थारिदकन्धरापरिपीडणं धवलसंखपरिकप्पिदेक्कपादभञ्जणं पविसिअपट्टिसजज्जरिदवेरिवच्छत्थलं पुरिसमत्थंडविण्णाणवच्छत्तिचित्तमोहणं झत्ति जुद्धं पवड्ढइ जरासन्धभीमसेणाणम् ।

---

(क) भोः पश्यत पश्यत । सकलगिरिकटकास्फोटितप्रतिशब्दनिर्दयास्फालितमण्डलं निःसङ्गसमङ्गीकृतबहुमार्गवल्गनं गलगुहानिरुद्धसदंशध्वनिसन्ततं ............? अन्योन्यवञ्चनाविस्मापितसकललोकं उद्भटगरुडपक्षपरवशोन्नामितमस्तकं वेसनीवेल्लनंनिरुद्धप्रतिमल्लभुजमण्डलं ............? नीरन्ध्रसन्दर्शितबाहुपीडनं ............? कक्षपटपरिवेषार्जितपादभञ्जनं ..................? निरुद्धप्रतिपक्षभुजसन्धिमस्तकं ...........? धवलशङ्खपरिकल्पितैकपादभञ्जनं प्रवेशितपट्टिशजर्जरितवैरिवक्षःस्थलं ..............? झटिति युद्धं प्रवर्तते जरासन्धभीमसेनयोः ।

1. 'शोभितं' ख.
2. 'पेक्खह सअल' ख.
3. 'णिरन्धकदंसिअबा' ख.

नारदः — यथाभिहितं वत्सेन ।

रुद्रस्य द्विरदासुरेण मरुतां पत्युर्महेन्द्रद्विषा[1]
　संफेटाः[2] सह कैटभेन च हरेर्ये सम्प्रवृत्ताः पुरा ।
साक्षी तेष्वयमेव नारदमुनिः किञ्चान्यथा मन्यते
　तान् सर्वान् मगधेन्द्रमारुतिमहासङ्ग्रामविस्मापितः ॥ ८८ ॥

अर्जुनः — अहो संविमर्दोन्मदिष्णुता[3] मगधराजस्य ।

नोत्तीर्णा बकराक्षसेन न पुनः सोढा हिडिम्बेन ये
　शल्येनापि विरोधिमण्डलमनःशल्येन नो लङ्घिताः ।
तानार्यस्य तरस्विनः प्रतिमुहुः प्रीत्या प्रतीच्छत्ययं
　क्रोधाक्रान्तकृतान्तपाशसदृशान् दोर्यन्त्रबन्धानमून् ॥ ८९ ॥

कृष्णः — अहो समरसम्भ्रमस्यातिभूमिः ।

युद्धदुन्दुभिनिध्वानानिर्भरीकृतकन्दराः ।
अमी जगत्त्रयं क्षुब्धं भर्त्सयन्तीव भूधराः ॥ ९० ॥

शिष्यः — (क) भो पेक्खह पेक्खह । एदाणं मल्लसंगामसंभमेण पअण्डा विअ तरंगलंघिअगअणंगणा घोलंति दंसिअभुवणविणासमुद्दा (समुद्दा) । सिढिलमूलबन्धसंभमोपसग्गग्गभग्गसिहरगलंतगंडसेलुच्चआ समुच्चलंति सेलुच्चआ । उब्भन्तबम्हंडसंरंभसिढिलसमीरण-

(क) भोः पश्यत पश्यत । एतयोर्मल्लसङ्ग्रामसम्भ्रमेण प्रचण्डा इव तरङ्गलङ्घितगगनाङ्गणा घूर्णन्ति दर्शितभुवनविनाशमुद्राः (समुद्राः) । शिथिलमूलबन्धसम्भ्रमप्रसङ्गाग्रभग्नशिखरगलद्गण्डशैलोच्चयाः समुच्चलन्ति शै-

१. 'द्विषां' ख.
२ 'संक्षोभाः सह' ख.
३. 'संमर्दोन्मदि' ख.

क्खंतधगलंतरिक्खं होइ अन्तरिक्खम् । धुव्वन्तधुवमंडलणिवेसम-घोलमाणविमाणकोडितािडदसुमेरसिहरो दंसिदपलओपसग्गो वलइ सग्गो । णमंतचउरंतधरणिमण्डलुब्भरणजज्ज(रि)दकुम्भपब्भारणिब्भरा विब्भळंति सअलादिसागआ । भज्जंतभुवणभारणिस्सहणिस्सेससीसणि-वेसो समुत्तंमयि जणिदादंकविसेसो सेसो । ता मण्णे सव्वहा कप्पि-दविकप्पावसाणं कप्पावसाणं वट्टइ त्ति ।

नारदः — अहो अवगतकार्यपर्यन्तानामपि सम्भ्रमेषु मानसं मुह्यति । यदमुष्य भगवतः पद्मासनस्यात्मन्येव प्रश्नोत्तरक्रमो वर्तते । तथाहि —

क एष ननु सम्भ्रमः त्रिभुवनं भिनत्तीव भो
 नियुद्धमिदमुद्धतं ननु तयोर्महावीरयोः ।
कुतोऽथ जगतां शमः श्रयति भागधेऽन्त्यां दशां
 ब्रवीति बहुधेत्यहो मुखचतुष्टयी ब्रह्मणः ॥ ९१ ॥

अपि च,

पौलस्त्योत्तालहेलातरलभुजबलान्दोलितस्यानुवेलं
 कैलासस्यानुकारं कुलगिरिपतयः सर्वतो बिभ्रतीमे ।

लोच्चयाः । उद्भ्रान्तब्रह्माण्डसंरम्भशिथिलसमीरणाक्रान्तधगला(?)न्तरिक्षं भवत्यन्तरिक्षम् । धुन्वद्ध्रुवमण्डलनिवेशघूर्णमानविमानकोटिताडितसुमेरुशिखरो दर्शितप्रलयोपसर्गो वलति सर्गः । नमच्चतुरन्तधरणिमण्डलोद्धरणजर्जरित-कुम्भप्राग्भारनिर्भरा विह्वलन्ति सकलदिशागजाः । भज्यमानभुवनभारनि-स्सहनिःशेषशीर्षनिवेशः समुत्ताम्यति जनितातङ्कविशेषः शेषः । तस्मान्मन्ये सर्वथा कल्पितविकल्पावसानं कल्पावसानं वर्तत इति ।

१. 'खलु' ख.

किञ्च[1] प्रोद्दञ्च्यमानः परिकुपितमहामल्लसङ्ग्रामवेगै-
रन्तर्दीप्तौर्वतापादिव लुठति हठात् क्षोणिपृष्ठे पयोधिः ॥९२॥

कृष्णः — एवमेतत् । यथाह पद्मयोनिपद्मनाभकलहसम्भवो (?) भगवान् ।

वीरव्यापारभारादनियतनमितोन्नामितैकैकपार्श्व-
क्ष्माचक्राक्रान्तिदूरव्यपगमतरलोत्तालतोयोत्कराणाम् ।
डोलासङ्ग्रामकेलिः परिणमति मिथस्तूर्णमेषां चतुर्णां
गूढक्रोधावगाढ[3]स्तिमितगिरिगणोद्गारिणां वारिधीनाम् ॥९३॥

अपि च,

स्कन्धे निक्षिप्य नम्रां भुवमनुभवतः खेदविच्छेदमीष-
च्छेषस्याशेषवक्त्रैरपि समसमयोद्गीर्णनिश्वासकीर्णाः ।
उद्दामा[4] धूमसङ्घाः सपदि पिदधते सप्तपातालगर्भान्
किञ्चोदञ्चन्ति वेगोच्चलदचलमहीमूलबन्धोरुरन्ध्रैः ॥ ९४ ॥

अर्जुनः — एवमेतत् । यथाह यमलार्जुनोत्पातमारुतः । सम्प्रति हि —

व्योम्नः क्रोडात् प्रतीपं लगति दिनपतेः स्यन्दनः पूर्वशैले
त्रस्यत्स्वर्दन्तिपृष्ठाच्च्यवति सहचरं वाजिनं वज्रपाणिः ।
किञ्चान्यद्दिग्वधूवः करतलकलितैरञ्चलैरंशुकानां
नित्योत्पक्ष्माणि चक्षूंष्यपिदधति समित्सम्भ्रमोद्यद्भ्रमीणि ॥९५॥

अपि च,

१. 'किञ्चित्प्रो' ख.
२. 'महान्' ख.
३. 'क्रोडावगाढ' ख.
४. 'उद्भूता' ख.

विक्रान्त्युत्कर्षहर्षाद् गगनचरगणैर्मागधस्योपरिष्टात्
पौष्पी वृष्टिर्निसृष्टा किल वलनवशात् तूर्णमार्यस्य मूर्ध्नि ।
यावत् सम्पातलीलां[1] जनयति विजयी तावदेष प्रवृत्तः
शौर्यश्लाघोद्यतानां स्वयमनिपुणतादोषमेषां प्रमार्ष्टि ॥ ९६ ॥

शिष्यः—(क) भो पेक्खह । णं एस मागहो सरोससमरभीमणो भीमसेणेण णिट्ठुरणिट्ठाविदकलहहत्यत्थोरहत्थप्पहारजज्जारिदसन्धिबन्धं जुज्झिय महाभुअङ्गो व्व गलुलेण, चाणूरमल्लो व्व महुमहणेण, जलन्धरासुरो व्व कालकन्धरेण, दहमुहो व्व हेहअज्जुणेण ससंभमं संगहियो । तक्खणं च होइ व्व हरिसुप्फुल्लणेत्तो सहस्सणेत्तो, सम्मदवियम्भमाणहासलंच्छियकवोलो पोल्लत्थो, पसरंतभिउडितडप्पभञ्जणो पभंजणो, तुवरन्तकरग्गलग्गपाससंजमो जमो, मयुलंतकन्दोट्टकान्तिणेत्तो तिणेत्तो । गलिअगव्वा व्व दाणवा । गज्जिअं च पज्जत्तपलअपज्जण्णणिग्घादघोसगम्भीरभीसणं पडिरवभरिअबह्मंडोदरं विओदरेण ।

(कृष्णार्जुनौ हर्षं नाटयतः ।)

(क) भोः पश्यत । नन्वेष मागधः सरोषसमरभीषणो भीमसेनेन निष्ठुरनिष्ठापितकलभहस्तस्थूलहस्तप्रहारजर्जरितसन्धिबन्धं युद्ध्वा महाभुजङ्ग इव गरुडेन, चाणूरमल्ल इव मधुमथनेन, जलन्धरासुर इव कालकन्धरेण, दशमुख इव हैहयार्जुनेन ससंभ्रमं सङ्गृहीतः । तत्क्षणं च भवतीव हर्षोत्फुल्लनेत्रः सहस्रनेत्रः, सम्मदविजृम्भमाणहासलाञ्छितकपोलः पौलस्त्यः, प्रसरद्भ्रुकुटितटप्रभञ्जनः प्रभञ्जनः, त्वरमाणकराग्रलग्नपाशसंयमो यमः, मुकुलायमानेन्दीवरकान्तिनेत्रस्त्रिनेत्रः । गलितगर्वा इव दानवाः । गर्जितं च पर्याप्तप्रलयपर्जन्यनिर्घातघोषगम्भीरभीषणं प्रतिरवभरितब्रह्माण्डोदरं वृकोदरेण ।

१. 'संवादलीलां' ख.

नारदः — (सविशेषमालोक्य) ह ह ह,

घोरोद्गारश्वसनविसरच्छोणिताम्भःकणाना-
मासारेण क्षणमरुणयन्नन्तरिक्षस्य कुक्षिम् ।
बाहायन्त्रप्रगुणघटनोत्पिष्टपृष्ठास्थिभङ्ग-
ध्वानत्रस्यत्त्रिभुवनमरिर्भीमसेनेन भग्नः ॥ ९७ ॥

कृष्णः — (विलोक्य) भगवन्! न खलु भग्नः; किन्तु भग्नोऽयमस्माकं मनोरथः । यतः,

जीवितापायपर्यन्तं भङ्क्त्वा भीमेन भूतले ।
एष क्षिप्तोऽपि सुप्त्वेव प्रत्यर्थी पुनरुत्थितः ॥ ९८ ॥

अर्जुनः —(सखेदम्) अहो अद्भुतम् । यतः,

वीर्यादार्येण भग्नोऽपि पुनरुत्थाय युध्यति ।
(सहर्षम्) भग्नः पुनरयं दिष्ट्या (सानुतापम्) धिगेष पुनरुत्थितः ॥ ९९ ॥

नारदः —

भोश्चित्रं जगति ममापि चक्षुषोः प्रा-
गीदृक्षः समरविधिः परोक्षभूतः ।

कृष्णः — धिङ्माया किमियमसौ कथं मयि स्यात् ।

अर्जुनः — किं तावत् प्रभवति नान्तकोऽप्यमुष्मै ॥ १०० ॥

१. 'प्रगुणनघनोत्पिष्ट-' ख.
२. '(विलोक्य)' इति कपाठे न.
३. 'न खलु न खलु भग्नः शत्रुः' ख.

(सर्वे चिन्तां नाटयन्ति ।)

(नेपथ्ये)

नैतैर्यत्नैस्त्वया शक्यो हन्तुं द्रुमातुरो नृपः ।
तस्मादसारादारम्भान्निवर्तस्व वृकोदर ! ॥ १०१ ॥

(सर्वे आकर्णयन्ति ।)

कृष्णः— काले खलु साभिप्रायमशरीरभारती समुच्चरति ।

शिष्यः—(क) अम्मो मच्चन्दआरित्तणं पभंजणतणअस्स । जं दाणिं समरणिव्वत्तणप्पवुत्तं असरीरसरस्सइं आअण्णअन्तो वि महाराअं जंघासु गेह्णिअ सरभसं च गअणंगणे समंदोलिअ धरणिपिट्ठे गाढमप्फालेदि ।

कृष्णः—साधु वृकोदर ! साधु । अशरीरवाचोऽभिप्रायं कर्मणा विवृणोषि । यतः, नैतैर्यत्नैः(त्वया) शक्य इति यत्नान्तरशक्यत्वमभिहितम् । द्रुमातुरशब्देन च द्विधा विदारणमेव पुनरुपदिष्टम् ।

नारदः —वत्स ! न केवलमेवास्फालयति । किन्तु,

(क) अहो स्वच्छन्दकारित्वं प्रभञ्जनतनयस्य । यदिदानीं समरनिर्वर्तनप्रवृत्तामशरीरसरस्वतीमाकर्णयन्नपि महाराजं जङ्घयोर्गृहीत्वा सरभसं च गगनाङ्गणे समान्दोल्य धरणिपृष्ठे गाढमास्फालयति ।

१. 'त्वया शक्य' इति खपाठे न.

मङ्क्षु क्षिप्त्वाग्रकायं क्षितितलफलके सव्यमाक्रम्य पद्भ्यां
जङ्घाकाण्डं द्वितीयं सरलकरिकराकारमुत्क्षिप्य दोर्भ्याम् ।
अन्तर्दोला(यितान्त्रा)न्विहरलगलत्फेनिलासृक्प्रवाहं
त्रुट्यत्पृष्ठास्थिपीठस्फुटितपटुरवं पाटयत्येष शत्रुम् ॥ १०२ ॥

अर्जुनः — अहो अद्भुतान्तरमिदं च वर्तते ।

आर्येणाजौ मगधनृपतेर्दारितस्योदरान्तात्
सद्यो विद्युन्निभमभिनभो जृम्भते ज्योतिरेतत् ।
तच्चोदारं त्रिदशगुरुपाकारमङ्गीकरोति
स्वर्गस्त्रीभिस्तदनु गमितः सोऽपि वैमानिकत्वम् ॥ १०३ ॥

(सर्वे विस्मिताः ।)

नारदः — ननु प्रसिद्धोऽयं वादः ।

प्रतिक्रिया पातकसन्ततीना-
माकल्पमिष्टा यशसः प्रतिष्ठा ।
आब्रह्मलोकं त्रिदिवस्य पन्था
राज्ञां रणे यत् प्रतिशत्रु मृत्युः ॥ १०४ ॥

शिष्यः — (क) भो एदाओ दाव हदो हदो मागहो त्ति सुणिअ सरअणदपुलिणमंडलादो व्व पसा(रिआ) सलिलसंघा(द ! दा) पच्चूसविसदणहकुहरादो व्व पयोसतिमिरवित्थारा महावराहदढदं(ड ! ठा)समु-

---

(क) भो एतास्तावत् हतो हतो मागध इति श्रुत्वा सरयनदपुलिन-मण्डलादिव प्रसारिताः सलिलसङ्घाताः प्रत्यूषविशदनभःकुहरादिव प्रदोषतिमिर-

---

१. 'बहुलगलं फेनि' ख.
२. 'निभमपि नभो' ख.
३. 'तच्चोदारत्रिदश' ख.
४. 'यशसां' ख.

क्खिप्पमाणमेदिणीपेढादो व्व पलअजलधिकल्लोला झत्ति समरंगणपरिसरादो विअंभमाणभीमसेणभअविब्भला पलाअन्ति मगहराअधजिणीओ ।

नारदः—ननु युक्तमेतत् । स्वामिसाराः सैनिका इति ।

कृष्णः—न खलु नखरप्रहारदारितमदकरिणि केसरिणि जृम्भमाणे गिरिकटकनिकटभाजो भवन्ति कलभयूथाः ।

(नैपथ्ये)

भो भो! भीताः शृणुत मगधक्षोणिभृद्दण्डनाथाः
संस्तभ्यन्तां दिशि दिशि बलान्यङ्ग का विद्रवन्ति ।
विद्विट्शब्दग्रहणविमुखश्रोत्रमार्गो निसर्गा-
दातत्राणप्रणयिहृदयो नन्वहं भीमसेनः ॥ १०५ ॥

अर्जुनः—वयस्य! पश्य पश्य । नन्वेष मगधराजभुजपरिघपरिघट्टनमृदितमेदुरांसमण्डलो विपुलफालभित्तिगलितघर्मवारिशीकरः कठोरकरभकन्धराकेसरसदृशसमरधूलिधूसरितपृष्ठपीठो विकचबन्धुजीवकुसुमसदृशशत्रुरक्तलेशलाञ्छितशरीरो माङ्गलिकमृदङ्गनिध्वानगम्भीरभारतीसमाश्वासितसकलारिसैनिकः सविनयमार्य इत एवाभिवर्तते ।

(ततः प्रविशति यथानिर्दिष्टो भीमसेनः ।)

(सर्वे पश्यन्ति ।)

भीमसेनः—(जरासन्धमनुसन्धाय स्वगतम्)

---

विस्तारा महावराहदृढदंष्ट्रासमुत्क्षिप्यमाणमेदिनीपृष्ठादिव प्रलयजलधिकल्लोला झटिति समराङ्गणपरिसराद् विजृम्भमाणभीमसेनभयविह्वलाः पलायन्ते मगधराजध्वजिन्यः ।

नेदृशं पौरुषं क्वापि दृष्टपूर्वं तथाप्यसौ ।
पातितो धर्मराजस्य भागधेयेन मागधः ॥ १०६ ॥

(उपसृत्य) भगवन्! देवर्षे! एष वृकोदरो वन्दते ।

नारदः — भद्र! एवमेव सकलारातिकालाग्निरुद्रो भव ।

भीमः — अनुगृहीतोऽस्मि ।

कृष्णः — वयस्य! वायुनन्दन! इत इतो भवान् । एष निर्भरं परिरब्धुमिच्छामि । (इति गाढं परिष्वज्य) साधु समर्थितं यत् त्वया गुरुतरेत्यादि प्रतिश्रुतम् ।

भीमः — नन्वेषा भवतो भक्तानुग्रहसामग्री । किमत्र मया समर्थितम् ।

अर्जुनः — दिष्ट्या समुत्तीर्णप्रतिज्ञार्णवमार्यं पश्यामि ।

कृष्णः — वयस्य धनञ्जय! ईदृग्विधभ्रातृजनभुजबलेन निर्वर्तितराजसूयं धर्मराजं च कृतार्थं द्रक्ष्यसि ।

भीमार्जुनौ — ननु कृतार्थाः सर्व एव वयम् ।

यः स्मर्तॄणां दोग्धि निर्वाणमग्र्यं
ब्रह्मस्तम्भं यः स्वधाम्ना बिभर्ति ।
कल्याणानां कारणं शार्ङ्गपाणे!
स त्वं मित्रं वर्तसे देव! येषाम् ॥ १०७ ॥

भीमः — अनुजानन्तु मां भवन्तः कर्तव्यशेषनिर्वर्तनाय ।

१. 'भद्र' इति खपाठे न.
२. 'पाण्डुनन्दन' ख.
३. 'ननु' इति खपाठे न.

सर्वे — किमवशिष्टम् ।

भीमः — ननु क्षत्रियाणां मोक्षणम् ।

सर्वे — एवमिदम्

(नेपथ्ये)

हा तात! सकलभुवनैकवल्लभ! हा प्रत्यक्षीकृतखण्डपरशुप्रसादगर्वित! हा कामपालप्रहारलीलालम्पट! हा निखिलभूपालसंहारसवनदीक्षित! हा त्यागलीलापहसितशिबिदधीचिवैरोचनिचरित्र! हा सकलार्थिसार्थसङ्कल्पकल्पपादप! कां गतिं कालेन नीतोऽसि ।

(सर्वे आकर्णयन्ति ।)

नारदः — (विलोक्य) एष पितृमरणशोकविह्वलहृदयो वृद्धेनामात्येनाश्वास्यमानो मगधराजकुमार इत एवाभिवर्तते ।

शिष्यः — (क) जो सहदेवो त्ति सुणीअदि ।

कृष्णः — अहो शोकातुरोऽपि मधुरदर्शनः कुमारः ।

अर्जुनः — सर्वथैष भाजनं राजलक्ष्म्याः ।

भीमः — नन्वासन्नलोकान्तरे मरीचिमालिनि प्रकाशलक्ष्मीर्विभावसुमभिसरति ।

(ततः प्रविशति सामात्यः सहदेवः ।)

सहदेवः — (हा तातेत्यादि पठित्वा)

रुधिराम्बुकर्दमितपांसुमण्डले
समराङ्गणे व्रणितकीर्णविग्रहम् ।

(क) यः सहदेव इति श्रूयते ।

१. 'किं शिष्टम्' ख.
२. 'अपहासित' ख.

अपि पश्यतो मम भवन्तमग्रतो
हृदयं न विश्रमिति तात! ते वधम् ॥ १०८ ॥

अमात्यः — कुमार! अलमतिपरिदेवनदैन्येन[1] ।

सहदेवः — (अनाकर्ण्य साश्रुपातम्)

प्राणास्तृणानि वपुषि प्रणयः परस्ताद्
वीरस्य ते भवतु निस्स्पृहता च राज्ये ।
मामङ्कलालितमनाथमपोह्य बालं
लोकान्तरं कथय तात! कथं गतोऽसि ॥ १०९ ॥

(इति मूर्च्छति ।)

(सर्वे करुणं नाटयन्ति ।)

अमात्यः — कुमार! समाश्वसिहि समाश्वसिहि ।

(सहदेवः पुनस्तदेव पठति ।)

अमात्यः — नन्वशोच्यस्ते[2] वीरवर्गोचितां गतिं गतो जनकः । तदिदानीं त्वमपि कालोचितं प्रतिपद्यस्व ।

सहदेवः — का प्रतिपत्तिरितः[3] परम् ।

अमात्यः — नन्ववगतषाड्गुण्यतत्त्वो[4] भवान् । किमत्र मां पृच्छति ।

सहदेवः — नाहं शोकातुरः किमपि वेत्तुं प्रगल्भः ।

१. 'परिवादन' ख.
२. 'कुमार नन्वशो' ख.
३. 'अतः परम्' ख.
४. 'ननु' इति खपाठे न.

अमात्यः — ननु कुमार, साम्प्रतं पाण्डवेषु संश्रयमेव श्रेयसे समर्थयामि ।

सहदेवः -- शास्त्रदृष्टमार्यो ब्रवीति । किन्तु[1] अकृतपितृवध-प्रतीकारोऽहमत्र जिहेमि ।

अमात्यः — मा मैवम् । धर्मविजयिनो[2] हि वैरभाजनं न भवन्ति । तदेतान् गृहागतानुचितेनैवोपतिष्ठस्व ।

सहदेवः - यद्येवं[3] किमेषां प्राभृतमुपहरामि ।

अमात्यः -- य एष ते पितुः साङ्ग्रामिको रथवरः स तावदेषां चारणसञ्चारिणां प्रयाणौपयिकः[4] कल्प्यताम् ।

सहदेवः -- बाढम् ।

(उभौ[5] परिक्रामतः ।)

अमात्यः -- (तान् प्रति) एष प्रसादपात्रं मगधराजकुमारो युष्मानुपस्थितः ।

सर्वे -- इत इतः ।

सहदेवः -- (उपसृत्य) देवर्षे! नमस्ते ।

नारदः -- पितुरनवमो बाहुशाली[6] भव ।

सहदेवः — (पृष्ठतोऽवलोक्य) सूत! इत इतः ।

( सूतो रथमुपनयति । )

१. 'किञ्च अकृत' क.
२. 'विजयिनोऽपि' क.
३. 'यद्येषां प्राभृतमुपहरामि' क.
४. 'औपयिकं' क.
५. '(इति परिक्रामतः)' ख.
६. 'बाहुषाली' क.

सहदेवः — (सर्वानवलोक्य)

वासवाद्वसुमस्माच्च बृहद्रथमतः परम् ।
पितरं मे गतः सोऽयं स्यन्दनः प्रतिगृह्यताम् ॥ ११० ॥

(इति रथमर्पयित्वा प्रणमति ।)

सर्वे —(रथं प्रतिगृह्य कुमारमुत्थाप्य) एवमेव धर्मराजानुवृत्तिनिपुणो राजश्रियः परिणायको भव ।

सहदेवः — अनुगृह्यतामयं मित्रजनो नियोगदानेन ।

कृष्णः —

पाण्डवात् सहदेवात् त्वमभिन्नोऽस्माभिरीक्ष्यसे ।
तदेष प्रेष्यसे बन्धान्मुच्यन्तां मदिनीभृतः ॥ १११ ॥

सहदेवः — (अमात्यं प्रति) अनुष्ठीयतां नियोगः ।

अमात्यः — यदभिरुचितं भवद्भ्यः ।

सर्वे — सहदेव! त्वमपि पित्रे कृतयथोचितकृत्यः सिंहासनमशून्यं कुरु ।

(सहदेवस्तूष्णीमधोमुखस्तिष्ठति ।)

भीमार्जुनौ — कुमार! अलं वैक्लव्येन । सर्वथाजातशत्रोर्मित्रमसि ।

सहदेवः — तथा । (इति सामात्यो निष्क्रान्तः ।)

नारदः — कमलासनोपस्थानसमयो मां त्वरयति । तद् भवन्तोऽप्येतेन रथेन धर्मराजमुपतिष्ठन्तु ।

१. 'रथेन जयिनं धर्म' ख.

सर्वे — यदादिशति शतानन्दसम्भवः। (इति प्रणम्य) भगवन्! पुनरप्ययमेवमेव स्मर्तव्यः शिष्यवर्गः।

(नेपथ्ये)

जयति भुवनरक्षादीक्षितः शार्ङ्गपाणि-
जयति [1]विजयकीर्त्तिः पौरवो राजवर्यः

नारदः — एषा नभश्चरैर्गीयते भवतां भोगावलिः।

(नेपथ्ये)

एष वृद्धो महामात्यो विज्ञापयति—

अपगतनिगलानां साम्प्रतं भूमिपानां
स्वसदनमभिगन्तुं दीयतामभ्यनुज्ञा ॥ ११२ ॥

सर्वे — [2]यथासुखं गच्छन्तु।

नारदः — किं वो भूयः प्रियमुपकरोमि।

सर्वे — किमतः परमुपकर्तव्यमस्ति।

यन्निर्व्यूढा कुरुपरिवृढः साम्प्रतं सप्ततन्तुं
यच्चास्माभिर्न्यवधि मगधग्रामणीः सङ्गराग्रे।
यच्चेदानीमवनिपतयः स्वस्तिमन्तः समस्ता-
स्तत् किं ब्रूमो भवदुपगमानुग्रहो ह्यत्र हेतुः ॥ ११३ ॥

तथापीदमस्तु —

१. 'विशदकीर्तिः' ख.
२. '(सहर्षं) यथा' ख.।

(भरतवाक्यम्)

वंशोदग्रे गुणिनि रमतां रत्नगर्भा नरेन्द्रे
शश्वच्छम्भोश्चरणकमले भक्तिमानस्तु लोकः ।
सार्धं मित्रैरविरतरसान् स्वादयन्तः कवीनां
वाणीगुम्फान् सततगुणिनः सज्जनाः सन्तु कामम् ॥११४॥

[ इति निष्क्रान्ताः सर्वे ।]

भीमपराक्रमं नाम नाटकं समाप्तम् ।

॥ पार्वतीपरमेश्वराभ्यां नमः ॥

। शुभमस्तु ।